धर्मो विश्वस्य जगतः प्रतिष्ठा

प्रा ज्ञ पा ठ शा ला म ण्ड ल ग्र न्थ मा ला

# कौषीतकिब्राह्मणारण्यकविषयकोषः

संपादकः

वलानन्दसरस्वती

मार्गशीर्षः शुक्लः ४ चन्द्रवासरः शकः १८७६

# प्रकाशकस्य निवेदनम्

वेदार्थबुभुत्सुभ्योऽस्मद्गुरुचरणैर्विरचितः कोशोऽयमुपायनीक्रियते। वेदार्थज्ञानायायं ह्यनन्यसामान्यमुपकरिष्यतीति। अस्य कोशस्यायं विशेषो यद्वैदिकैर्वाक्यैरेव विविधसंदर्भगतैः पदार्थानाविष्करोति तेषांतेषां पदार्थानां विचित्रेषु वाक्यसंदर्भेषु संगतिं प्रकटयन्नेव। एतादृशः कोषः पूर्वं केनापि न प्रणीत इत्येतावतैव नायं वैशिष्ट्यमावहति, किंतु यां पद्धतिमनुसृत्यायं कोशः पदार्थान् व्याचष्टे तादृशी पद्धतिरेव यथावदर्थावधारणाय संदेहनिराकरणाय च प्रभवतीति। विविधसंदर्भसमुच्चयो ह्यत्रोद्धृतोऽस्ति, स चाभिधाभेदान् लक्षणाभेदान् व्यञ्जनाभेदांश्चानुसंधाय भावार्थान् ब्रूते, वाक्यार्थसमन्वयज्ञापनेन च ज्ञानकोशवत्समग्रं विषयं विवृणुते।

अयं हि कोशः कौषीतकिब्राह्मणं कौषीतक्यारण्यकं च विषयीकरोति, तद्गतानि यज्ञसंस्थासंबन्धीनि औपासनिकान्यध्यात्मविद्यागतानि च पदानि वाक्यखण्डांश्च अकाराद्यनुक्रमेण चोद्धरति। अस्मद्गुरुचरणैः पूर्वमेतादृश एव कोशः ऐतरेयब्राह्मणं ऐतरेयारण्यकं च विषयीकृत्य विरचय्य स प्रकाशितोऽस्ति। सर्वशाखीयानां संप्रत्युपलभ्यमानानां ब्राह्मणानामारण्यकानां चेदृशाः कोषा आवश्यकाः सन्तीत्येतं कोषमुपलभ्य परामृश्य च विद्वांसो मन्येरन्निति नूनं विश्वसिमः।

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

मार्गशीर्षः शुक्लः ४
शकः १८७६

॥ ॐ नमो गुरुभ्यः ॥

# प्रस्तावः

(१) अथ ऋग्वेदाम्नायस्य अनेकाः शाखा भवन्ति। शाखा नाम संहिताब्राह्मणयोः समुदायः। आरण्यकं च ब्राह्मणस्यैवांशः न पृथक् ग्रन्थः। अरण्याध्ययनात्तु स ब्राह्मणभाग आरण्यकमित्युच्यते। दिवाऽध्ययनादिकं च तत्र विशेषा भवन्ति। ताः शाखा इदानीं नाममात्रावशिष्टाः स्वरूपतश्च लुप्ताः। शाकलशाखा बाष्कलशाखा चेति शाखाद्वयमेवावशिष्टं वर्तमानम्। तयोरपि पठनपाठने शाकलशाखैव प्रचरति न बाष्कला। ब्राह्मणग्रन्थेषु च ऐतरेयब्राह्मणं सारण्यकं कौषीतकिब्राह्मणं च सारण्यकमिति ब्राह्मणद्वयमेवोपलभ्यते। तत्रापि संहितावत् ऐतरेयब्राह्मणमेव महाराष्ट्रियविप्रमुखे जागर्ति, कौषीतकिब्राह्मणं तु निद्रितम्, परन्तु लेखे उपलभ्यते। महाकौषीतकिब्राह्मणं च साङ्ख्यायनं–शाङ्खायनं इति वा प्रसिद्धस्य कल्पसूत्रस्य भाष्यकारेण चतुर्दशाध्याये दशमखण्डे 'महाकौषीतकिब्राह्मणाभिप्रायेण नाम्ना धर्मातिदेशः' (पृ. उत्तरार्धे २३७। 'सांख्यायनश्रौतसूत्रं' कलकत्ता सनः १८८८) इत्युल्लिखितमिति तत् एतद्भाष्यकारकाले उपलब्धमासीदिति स्पष्टमेव। इतरद् ब्राह्मणजातं कालग्रस्तम्।

(२) श्री आश्वलायनाचार्येण गृह्यसूत्रे तर्पणप्रकरणे यदाचार्याणां गणत्रयमुक्तम्, तत्र द्वितीये सांख्यायनगणे कौषीतक आचार्यः संगृहीतः। कुषीतकशब्दात् 'तस्यापत्यम्' इत्यौत्सर्गिके अणि शिवादित्वाद्वा 'शिवादिभ्योऽण्' इत्यणि कौषीतकशब्दस्य सिद्धिः स्वीकर्तव्या। स एवायं कौषीतकः सांख्यायनगृह्यसंग्रहे कौषीतकिः इति इकारान्तशब्देनोक्तः। 'विकर्णकुषीतकात् काश्यपे' इति कुषीतकपुत्रस्य काश्यपत्वाभावे 'अत इञ्' इति अपत्यार्थे इञि कौषीतकिः इति इकारान्तस्य सिद्धिः। काश्यपत्वे तु ढक्प्रत्यये कौषीतकेय इति स्यात्। अनेन कौषीतकिना दृष्टं ब्राह्मणमारण्यकसंहितं कौषीतकिब्राह्मणमित्युच्यते। इदमेव कौषीतकिब्राह्मणं सांख्यायनब्राह्मणमिति वदन्ति आरण्यकं च सांख्यायनारण्यकमिति। तत्तु न युक्तम्। सांख्यायनाचार्यो हि कल्पसूत्रकारः न ब्राह्मणद्रष्टा। यथा शाकलसंहितां ऐतरेयकं ब्राह्मणं सारण्यकमधीयते कर्मानुष्ठानार्थं च आश्वलायनीयं कल्पसूत्रं स्वीकुर्वते ते विप्रा आश्वालायना इत्युच्यन्ते, तेषां ब्राह्मणं तु न आश्वलायनब्राह्मणमिति भण्यते, तथा ये बाष्कलसंहितां कौषीतकिब्राह्मणं सारण्यकं पठन्ति कर्मानुष्ठानार्थं च सांख्यायनमहर्षिप्रणीतं कल्पसूत्रमवलम्बन्ते ते सांख्यायना इत्युच्यन्ते। परन्तु तेषां ब्राह्मणं कौषीतकिब्राह्मणमेव।

सांख्यायनब्राह्मणं तु खपुष्पमेव । सांख्यायनविप्रपठनीयत्वात्तु भ्रान्त्या कौषीतकिब्राह्मणमेव सारण्यकं सांख्यायनब्राह्मणमिति वदन्ति ।

(३) **आश्वलायनगृह्ये** ( १।२३।५ ) 'कौषीतकिनः समामनन्ति' इत्युक्तम् । तन्त्रवार्तिके **आचार्यकुमारिला** एव 'कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरणे एव स्वक्रमस्थस्य प्रवर्ग्यस्योत्पत्तिः' ( आनन्दाश्रमीये ३।३।१२।३२ पृ. ८७६ ) इति निर्दिशन्ति । **राणके च** ( न्यायसुधायां पृ. १३२१ चौखम्बा ) 'कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरणाधीत-प्रवर्ग्यवाक्यसमानार्थकत्वायापि' इत्युक्तम् । शास्त्रदीपिकाटीकाकारेण च **सोमनाथेन** ३।३।१२ अधिकरणे ( पृ. २५५ निर्णयसागरः ) 'कौषीतकिब्राह्मणे प्रवर्ग्यस्य ज्योतिष्टोमप्रकरणे एव आम्नानात्' इत्युक्तम् । **अध्वरमीमांसाकुतूहलवृत्तौ च** श्रीवासुदेवदीक्षितैरुक्तम्— ( २।३।४।११ सूत्रे ) "कौषीतकिब्राह्मणे हि तृतीयेऽध्याये दर्शपूर्णमासावनुक्रम्य चतुर्थेऽध्याये 'अनुनिर्वाप्यया वै देवाः' इत्यादिना ( खण्डः १ ) वैमृधमादित्यं च यागं विधाय 'अथातोऽभ्युदितायाः' ( खं. २ ) इत्यादिना अभ्युदितेष्टिं विधाय 'अथातोऽभ्युद्दृष्टायाः' इत्यादिना अभ्युद्दृष्टेष्टिं च विधाय 'अथातो दाक्षायणयज्ञस्य, दाक्षायणयज्ञेनैष्यन् फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते' ( खं. ४ ) इत्यादिना दाक्षायणयज्ञमनुक्रम्य 'अथातः साकं-प्रस्थायीयस्य' (खं. ९), 'अथातो मुन्ययनस्य' (खं. १०), 'अथातस्तुरायणस्य' (खं. ११), 'अथात आग्रयणस्य' (खं. १२–१४), 'अथातश्चातुर्मास्यानाम्' इत्यादिना ( अध्यायः ५ ) बहूनि कर्माणि अनुक्रान्तानि" इति । **संकर्षकाण्डीयभाट्टदीपिकायां तु** अन्यूनदशवारं ( २।३।९, ३।१।८, ३।१।१६, ४।४।७ इ. ) कौषीतकिब्राह्मणे इत्युक्त्वा तद्गतानि वाक्यानि उद्धृतानि । उक्ताः सर्वे वाक्योद्धाराः पुण्यपत्तनस्थानन्दाश्रमे शाङ्खायनब्राह्मणनाम्ना मुद्रिते पुस्तके अक्षरश एवोपलभ्यन्ते ।

सत्यपि अस्य ब्राह्मणस्य सारण्यकस्य कौषीतकित्वे शशशृङ्गायमाणत्वे च शाङ्खा-यनब्राह्मणारण्यकत्वेऽपि ये शाङ्खायनत्वे एवाग्रहिलाः, नमस्तेभ्य आकूपरात् । इत्यलम् ।

( ४ ) कौषीतकिब्राह्मणेऽस्मिन् अध्यायास्त्रिंशत् । प्रत्यध्यायं च कतिचित् खण्डानि । तत्र प्रतिपाद्यविषयाणां पाठक्रमेण विषयनिर्देशः क्रियते अध्यायखण्डाङ्कसाहित्येन ।

१।१–५ अग्न्याधेयम् ।

२।१–४,७–९ अग्निहोत्रम् । ५ प्रवासे उपस्थानम् । ६ अग्नेः अरण्योः समारोहः ।

३।१–९ दर्शपूर्णमासौ ।

४।१ वैमृधः अनुनिर्वाप्यः । २ चन्द्राभ्युदितेष्टिः । ३ अभ्युद्दृष्टेष्टिः उपवसथे पश्चाच्चन्द्रदर्शने । ४ दाक्षायणयज्ञः । ५ इळादधः । ६ सार्वसेनियज्ञः । ७ शौनकयज्ञः । ८ वसिष्ठयज्ञः । ९ साकंप्रस्थाय्यः । १० मुन्ययनम् । ११ तुरायणम् । १२–१४

आग्रयणम् । तत्र १२ श्यामाकानाम् । १३ वेणुयवानाम् । १४ व्रीहीणां यवानां च, आग्रयणानुकल्पाश्च ।

५।१–१० चातुर्मास्यानि । तत्र १–२ वैश्वदेवम् । ३–४ वरुणप्रघासाः । ५–७ साकमेधाः । ८–१० शुनासीरीयम् ।

६।१–९ महादेवः अष्टनामधेयः । १०–१४ ब्रह्मत्वमैष्टिकम् । १५ अग्न्याधेयादीनां चातुर्मास्यान्तानां प्रशंसा ।

७–१५ अध्यायाः, १६।१–९ च **अग्निष्टोमः** । तत्र—

७।१–४ दीक्षणीया । ४ केशिनी दीक्षा । ५–९ प्रायणीयोदयनीये । १० सोमक्रयः ।

८।१–२ आतिथ्या । २ अग्निमन्थनम् आतिथ्ये चातुर्मास्येषु च, पशौ विशेषः । ३–७ प्रवर्ग्यः । ८–९ उपसदः ।

९।१–२ अग्निप्रणयनम् । ३–४ हविर्धानप्रवर्तनम् । ५ अग्नीषोमप्रणयनम् । ६ सोमप्रणयनम् ।

१०।१–२ यूपः । ३–६ अग्नीषोमीयः पशुः । तत्र ५ पशुपुरोडाशः । ६ मनोता, प्रवृताहुतयश्च ।

११।१–८ प्रातरनुवाकः ।

१२।१–३ एकधना आपः अपोनप्त्रीयं च । ४ उपांशु– अन्तर्यामौ ग्रहौ । ५ बहिष्पवमानः । ६–७ सवनीयः पशुः । ८ पश्वेकादशिनी ।

१३।१ सदसि प्रसर्पणं धिष्ण्यादिनमस्काराश्च । २–४ सवनीयपुरोडाशाः । ३ स्विष्टकृत् । ५ द्विदेवत्या ग्रहाः । ६ प्रस्थितयाज्याः । ६–८ द्विदेवत्य–इडा–होतृचमसभक्षाः । ९ ऋतुयाजाः ।

१४।१–२ आज्यं शस्त्रम् । ३ आहावाः प्रतिगराश्च । ४ प्रउगं शस्त्रम् ।

१५।१ ग्रावस्तोत्रीयम्, दधिघर्मः, सवनीयपुरोडाशाः, भक्षः, दाक्षिणहोमोत्तरं दक्षिणानयनम्, मरुत्वतीयग्रहप्रचारः । २–३ मरुत्वतीयं शस्त्रम् । ४–५ निष्केवल्यं शस्त्रम् ।

१६।१ आदित्यग्रहः तृतीयसवनारम्भे । २ सावित्रग्रहः । ३–४ वैश्वदेवं शस्त्रम् । ५ घृतयागः, सोमयागः, घृतयागः । ६ पात्नीवतग्रहः । ७–९ आग्निमारुतं शस्त्रम् । १० **सौत्रामणी** । ११ **उक्थ्यः** ।

१७।१–४ **षोडशी** ।

१७।५–९, १८।१–१४ } **अतिरात्रः** । १८।१–५ आश्विनं शस्त्रम् ।

१९–३० अध्यायेषु **सत्रम्** । तत्र—

१९।१ अग्नीनां संनिवापः, संवपनीया इष्टिः । २ प्राजापत्यः पशुः, तस्य पशुपुरोडाशे देवताविकल्पः, दीक्षाकालश्च । ३ उपवसथकालः । ४ दीक्षणीया, आतिथ्या, अग्निचित्या । ५ ऐकाहिकं कर्म, हविर्धानयोः प्रवर्तनम्, अग्नीषोमयोः प्रणयनम्, अग्नीषोमीयः पशुः, देवसुवां हवींषि, सर्वपृष्ठामेके, अथ सुन्वन्ति । ६ अनूबन्ध्यावपोत्तरं त्वाष्ट्रः पशुः । ७ देविकानां हवींषि, देवीनां हवींषि चैके, दिशामवेष्टयश्चैके, उदवसानीया, मैत्रावरुणी पयस्या । ८ चतुर्विंशमहः अग्निष्टोम उक्थ्यो वा, आज्यम्, प्रउगम् । ८–९ मरुत्वतीयं शस्त्रम् । १० निष्केवल्यम्, वैश्वदेवम्, आग्निमारुतम् ।

२०–२१ अध्यायौ–अभिप्लवः षडहः । तत्र–

२०।२ ज्योतिः । ३ गौः । ४ आयुः इति प्रथमस्त्र्यहः ।

२१।१–२ गौः । ३ आयुः । ४ ज्योतिः इति द्वितीयस्त्र्यहः । ५ षडहे प्रथमोत्तमे अहनी अग्निष्टोमौ मध्ये चत्वार उक्थ्याः ।

२२।१ व्यूढसमूढयोः प्रथममहः । २ द्वितीयम् । ३–५ तृतीयम् । ६–९ चतुर्थम् । ६ न्यूङ्खः ।

२३।१–३ पञ्चमम् । ४–८ षष्ठम् ।

२४।१–२ अभिजित् । ३–९ स्वरसामानस्त्रयः ।

२५।१–१० विषुवान् । १० स्वरसामानस्त्रयः । ११–१९ विश्वजित् ।

२६।१ सत्रविचारः । २ गोआयुषोर्मीमांसा । ३ शस्त्रादौ प्रमादे मीमांसा । ४–६ याज्यादौ प्रमादे मीमांसा । ७ छन्दोमेषु मीमांसा । ८–१० छन्दोमः प्रथमः । ११–१३ छन्दोमः द्वितीयः । १४–१७ छन्दोमः तृतीयः ।

२७।१–७ दशममहः ।

२८।१–२ प्रैषानुवचनं मैत्रावरुणस्य । २ अभिरूपानुवचनादि । ३ उन्नीयमानानां याज्यापुरोऽनुवाक्याः होत्राणाम्, इडाहोतृचमसभक्षौ । ४ अच्छावाकस्य पुरोडाशशकलपरिहरणम् । ५–६ अच्छावाकोपहवः । ७ अच्छावाकस्य उन्नीयमानानुवचनीयाः याज्या च । ८ ऋतुप्रैषमीमांसा । ९ आज्यादि शस्त्रं क्वचिदेकदेवत्यं क्वचिद् द्विदेवत्यम् । १० स्तोत्रियानुरूपविषयकं किञ्चित् ।

२९।१ ग्रावस्तोत्रम्, ग्रावस्तुतो धर्माश्च । २ पवमानस्तोत्रोत्तरं दधिघर्मः, सवनीयाः पुरोडाशाः, उन्नीयमानानुवचनीयाः, प्रस्थितयाज्याः, इडाहोतृचमसयोर्भक्षः, दाक्षिणहोमोत्तरं दक्षिणानयनम्, मरुत्वतीयग्रहस्य पुरोऽनुवाक्याः । ३ मैत्रावरुणस्य ब्राह्मणाच्छंसिनः अच्छावाकस्य च पृष्ठानि तत्र ऋग्विशेषाश्च । ४ मैत्रावरुणस्य अहरहःशस्यादीनि ।

५ शिल्पानि चतुर्थेऽहनि । ६ ब्राह्मणाच्छंसिनो नौधसमित्यादि । ७–८ अच्छावाकस्य कालेयमित्यादि । ८ होत्राणां शंसने कश्चिद् विशेषः, मैत्रावरुणादीनां छन्दोमेषु सूक्तसंख्याविशेषादि ।

३०।१ सवनानां देवताः, आदित्यग्रहस्य पुरोऽनुवाक्या, आर्भवपवमानोत्तरं पशुप्रचारः, सवनीयपुरोडाशाः, उन्नीयमानानुवचनीयाः, प्रस्थितयाज्याः, इडाहोतृचमसयोर्भक्षः, औपासनोपासनम् । सावित्रग्रहः तत्पुरोऽनुवाक्या च, आग्नीध्रः पात्नीवतस्य यजति । २ उक्थ्योक्थानि इत्यादि । ३ मैत्रावरुणादीनामृग्विशेषाः, षष्ठेऽहनि सामविशेषाः, सहचराणि शिल्पानि । ४ नाभानेदिष्ठम्, वालखिल्यानां शंसनविशेषः । ५ तार्क्ष्यदूरोहणम्, ब्राह्मणाच्छंसिनः सुकीर्त्यादि, वृषाकपौ न्यूङ्खः, कुन्तापादि, ऐतशप्रलापेषु विशेषः । ६ आदित्याङ्गिरसीशंसनम् । ७–९ दिशांक्लृप्त्यादिशंसनम्, अच्छावाकादेः पर्याससंख्याविशेषः । १० मैत्रावरुणादीनां चतुर्विंशादौ शंसनीयऋगादिसंख्याविशेषः । ११ रात्रिशस्यानि इत्यादि, हारियोजनेन चरन्ति, तस्य पुरोऽनुवाक्या ।

(५) अथ **कौषीतक्यारण्यकम्** । अत्र अध्यायाः पञ्चदश । प्रत्यध्यायं प्रायः कानिचित् खण्डानि । तत्रत्यानां विषयाणां पाठक्रमेण अनुक्रमः इत्थम्—

१–२ अध्याययोर्महाव्रतम् । तत्र—

१।१ तस्य शंसने नियमाः, तत्र पञ्चविंशः स्तोमः, ऐन्द्र ऋषभः प्राजापत्यः अजश्च । २ आज्यम्, प्रउगं त्रैष्टुभम् । ३ मरुत्वतीयस्य प्रतिपदनुचरौ । ४ आज्याहुतयः अष्टौ, परिमादजपः, क्रोशानुक्रोशादीनि सामानि । ५ होतुर्जपः, अग्न्युपस्थानम्, आदित्योपस्थानम् । ६–७ प्रेङ्खः, तत्र होतुरारोहे नियमाः । ८ होतुर्जपः ।

२।१ निष्केवल्यस्य शस्त्रस्य हिंकारेणारम्भः, राजनं साम पृष्ठम्, तदिदास इति पञ्चत्रिंशदृचाम् ‘ नदं वः ’ इति नदेन विहरणम्, अथ सूददोहाः । सोऽयं निष्केवल्यस्य पक्षिरूपत्वेन ध्यातस्य आत्मा । २ शीर्षण्यानि शंसति । ३ ग्रैवं शंसति । ४–५ अक्षां शंसति ( इति बाहुद्वयम् ) । प्रहस्तकं शंसति । ६ अनूकं शंसति । ७–१० अशीतीः शंसति ( ८ गायत्रीम्, ९ बार्हतीम्, १० औष्णिहीम् ) । ११ वशं शंसति ( वशेन ऋषिणा दृष्टम् ) । १२ द्विपदाः शंसति । १३ ऐन्द्राग्नं सूक्तं शंसति । १४ आयतनं शंसति । १५ आनुष्टुभं शंसति । १६ त्रिष्टुप्शतं शंसति । १७ बृहतीसहस्रस्य स्तुतिः, प्रेङ्खप्रथनम्, तत् परामृश्य ग्रहजपः, वैश्वकर्मणः अतिग्राह्यः । १८ वैश्वदेवं शस्त्रम् ।

**इति महाव्रतं समाप्तम् ।**

३।१–७ गाङ्ग्यायनिश्वेतकेतुसंवादः । ३ देवयानः पन्थाः ब्रह्मलोकादिवर्णनम् । उपासनाविशेषोऽत्रोक्तः ।

४।१–२ प्राणोपासना । ३ एकधनावरोधनं नाम होमः मृत्युपरिहारार्थः । ४ दैवस्मरो नाम होमः वशीकरणार्थः । ५ अग्निहोत्रमान्तरं ध्यानरूपम् । वाक्प्राणयोः परस्परं

होमः । ६ ऋग्यजुःसामसु ब्रह्मोपासना । ७ प्रातर्मध्यंदिने सायं आदित्यायार्घ्यप्रदानम् । ८ शुक्लप्रतिपदि पश्चात् चन्द्रमसं दृष्ट्वा उपस्थातव्यम् । ९ पौर्णमास्यां पुरस्तात् चन्द्रमसं दृष्ट्वा उपस्थातव्यम् । १० जायाहृदयाभिमर्शो मन्त्रेण प्रजादीर्घजीवनाय । ११ प्रवासादेत्य पुत्रस्य मूर्धानमभिजिघ्रेत् मन्त्रेण इत्यादि । १२–१३ दैवः परिमरः शत्रुनाशाय । १४ निःश्रेयसादानं प्राणाधीनं सर्वमित्युपासना । १५ पितापुत्रीयं संप्रदानम्, संप्रत्तिविशेषोऽयम् ।

५।१–८ इन्द्रप्रतर्दनाख्यायिका । प्राणोऽस्मि प्रज्ञात्मा इत्युपदेशः ।

६।१–२० बालाक्यजातशत्रुसंवादः । अत्र ब्रह्मोपदेशः ।

७।१ शान्तिमन्त्रः । २–८ संहितोपासनम् । ९–१० प्राणो वंश इत्युपासना । ११–१३ पदक्रमोपासना । १४–२३ संहितोपासना ।

८।१–२ प्राणो वंश इत्यादिरन्या उपासना । ३–६ चत्वारः पुरुषाः । ४ बह्वृचा महत्युक्थे मीमांसन्ते इत्यादि । ६ महाव्रतमग्निचयनं च प्रायः परस्मै नाचक्षीत । ७ मरणसूचकानि अरिष्टानि । स म आत्मेति विद्यात् । ८ स्पर्शादिवर्णोपासना । ९–१० दैवी वीणा । ११ णकारषकारयोरुपासना इत्यादि ।

९।१ शान्तिमन्त्राः । २–८ ज्येष्ठश्रेष्ठप्राणोपासना, होमविशेषश्च ।

१०।१–८ अग्निहोत्रम् आन्तरम् ।

११।१–२ शरीरेन्द्रियप्राणेषु देवता आवेशिताः । ३ मरणसूचकानि अरिष्टानि । ४ मरणसूचकाः स्वप्नाः । ४–८ आयुर्वृद्ध्यर्थं होमो जपश्च ।

१२।१–८ बैल्वमणिकल्पः ।

१३।१ वैराग्यसंस्कृते शरीरे ब्रह्मयज्ञनिष्ठो भवेत् । आत्मा द्रष्टव्यः । शान्तो दान्तः । तत्त्वमसि, अहं ब्रह्मास्मि ।

१४।१ अध्येतव्यम् । २ स्थाणुरयं भारहारः ।

१५।१ विद्यावंशः ।

(६) इतः परं कौषीतकिब्राह्मणारण्यकस्थानां विषयाणां वर्णक्रमेण संपादितः कोष एवोपन्यस्यते । तत्र च प्रायो मूलवाक्यान्येव तत्तद्विषयाणां सूचकानि प्रतिपादकानि च विषयानुसारेण अवचित्यावचित्य निवेशितानि । अनेकत्र तु मूलवाक्यानि संक्षिप्य स्वशब्दैरुपसंस्कृत्यापि निवेशितानि । मूलग्रन्थस्य यज्ञप्रतिपादकत्वात् अप्रसिद्धशब्दघटितत्वेन लोके दुर्ज्ञेयत्वेन तदर्थनिर्वचनमपि निवेशनीयमत्र । शांखायनश्रौतसूत्रतद्भाष्योक्तो विशेषस्तत्रतत्रोद्धर्तव्य आसीत् । तथापि तत् किमपि नास्माभिः कृतं मुद्रणपृष्ठमर्यादातिक्रमभयात् । नितान्तं महान् हि स विषयः । स्वतन्त्र एव तत्र ग्रन्थो निर्मातव्यः स्यात् ।

(७) कोषोऽयमस्माभिः दश वर्षेभ्यः प्रागेव विरचितः। मुद्रणलेखोऽपि तदनन्तरमचिरादेव श्री गणेश रामचंद्र परांजपे महाशयैर्लिखितः। तत्प्रकाशनकालस्तु इदानीमुपसंप्राप्तः। इति परांजपे महाशयानां प्रकाशकानां साहाय्यकमाचरतां चेति सवषामभिनन्दनं प्रकटयामः। इति शम्।

( ८ ) अत्र कोषे 'कौआ.' इत्यस्य 'कौषीतकि–आरण्यकम्' इत्यर्थः। यत्र तु नाक्षरनिवेशः, तत्र 'कौषीतकि–ब्राह्मणम्' इति ज्ञेयम्। शांश्रौ. शांखाश्रौ. इत्यस्य शाङ्खायनश्रौतसूत्रम् इत्यर्थः।

मार्गशीर्षः सुदि<br>चतुर्थी चन्द्रवासरः<br>शकः १८७६.

स्वामी केवलानन्दसरस्वती

ॐ वेदपुरुषाय नमः

# कौषीतकिब्राह्मणारण्यकविषयकोषः ।

## हरिः ॐ

**अक्तवती ऋक्** 'अञ्जन्ति त्वामध्वरे०' यूपायाज्यमानायान्वाह । कौब्रा. १०।२. 'अञ्जन्ति यं प्रथयन्तो न विप्राः' । प्रवर्ग्ये । ८।४.

**अक्षरोपासना** स्पर्शानां ऊष्मणां स्वराणां च । कौआ. ८।८.

**अक्षां शंसति** ( बाहुं ) निष्केवल्यस्य, महाव्रते 'उरुं नो लोकमनु' इति ऋक् पच्छः , सूददोहाः । रथंतरस्य स्तोत्रियः पुनरादाय ककुप्कारम्, सूददोहाः । रथंतरस्यानुरूपं पुनरादाय ककुप्कारम्, सूददोहाः । धाय्या पच्छः सूददोहाः । राथंतरः प्रगाथः अर्धर्चशः, सूददोहाः । 'य एक इद्धव्यश्चर्षणीनाम्' इति सूक्तं पच्छः । तत्रत्यां द्वितीयामृचमुद्धृत्य 'विश्वो ह्यन्यो अरिराजगाम' इति ( ७।७।२० ) द्वितीया कर्तव्या, सूददोहाः । 'तमिन्द्रं जोहवीमि' इति प्रहस्तकः तृचः पच्छः, सूददोहाः । इति एका अक्षा । अथापरा– 'स सूर्ये जनयन्' ऋक् ( सौत्र ) पच्छः, सूददोहाः । बृहतः स्तोत्रियः पुनरादाय ककुप्कारम्, सूददोहाः । बार्हतः प्रगाथः अर्धर्चशः, सूददोहाः । 'विश्वो ह्यन्यो अरिराजगाम' सूक्तं पच्छः, तत्र द्वितीयामुद्धृत्य तत्स्थाने 'य एक इद्धव्यश्चर्षणीनाम्' इति शंसेत्, सूददोहाः । 'विश्वाः पृतना अभि' इति तृचः प्रहस्तकः, तत्र पच्छः प्रथमा, अर्धर्चशः उत्तरे, सूददोहाः । कौआ. २।४–५, शांखासू. १८।४–५.

**अग्निचयनम्** । परस्मै नाग्निं चिनुयात् । कौआ. ८।६.

**अग्निचिद्व्रतम्** । मैत्रावरुण्या पयस्यया अनिष्ट्वा नाग्निचित् मैथुनं चरेत । १९।७.

**अग्निप्रणयनं** अग्निष्टोमे । उपवसथे प्राञ्चमग्निं प्रणयन्ति । पुरस्तादाहवनीयेन पश्चाद् गार्हपत्येन उत्तरत आग्नीध्रीयेण दक्षिणतो मार्जालीयेन, येऽन्तः सदसं तैर्मध्यतः । वि धिष्ण्यान् हरन्ति । उच्चैरनुब्रूयात् प्रथमतः । ततः उपांशु चरेयुः यथैव मिथः संशृण्वीरन् । ९।१. 'प्र देवं देव्या धिया' इति तृचं प्रह्रियमाणायान्वाह । 'इळायास्त्वा पदे' ( इति साद्यमानयोरिध्मयोः– सूत्रं ) 'जातवेदो निधीमहि' इत्यर्धर्चेन निधीयमानमनुस्तौति । 'अग्ने विश्वेभिः स्वनीक, सीद होतः, नि होता होतृ' इति सन्नमनुस्तौति । 'त्वं दूतस्त्वमु नः' इति परिदधाति । अष्टावन्वाह । त्रिः प्रथमया त्रिरुत्तमया द्वादश । ९।२.

अग्निप्रणयनं वरुणप्रघासेषु । ५।३.

अग्निप्रणयनं साकमेधेषु । ५।५.

**अग्निमन्थनं** आतिथ्यायाम् । आसन्ने हविषि आतिथ्ये । द्वादश अग्निमन्थनीया अन्वाह । त्रिः प्रथमया त्रिरुत्तमया षोडश संपद्यन्ते । 'अभि त्वा देव सवितः' इति सावित्रीं प्रथमामन्वाह । 'मही द्यौः पृथिवी च नः' इति द्यावापृथिवीयामन्वाह । 'त्वामग्ने पुष्करादधि' इति तृचं मथ्यमानायान्वाह । 'उत ब्रुवन्तु जन्तवः' इति जाताय । 'आ यं हस्तेन खादिनम्' इति हस्तेन धार्यमाणाय । 'प्र देवं देववीतये' इति प्रह्रियमाणाय । 'आ जातं जातवेदसि' इति आहूयमानाय । 'अग्निनाऽग्निः समिध्यते' इति समिध्यमानाय । 'तं मर्जयन्त सुक्रतुम्' इति परिदधाति आतिथ्यायां च चातुर्मास्येषु च । पशौ तु 'तं मर्जयन्त सुक्रतुम्' इति

पराचीमनूच्य 'यज्ञेन यज्ञमयजन्त देवाः' इति त्रिष्टुभा परिदधाति। ८।१–२.

अग्निमन्थनं, प्रवासे अरण्योरग्नीन् समारोहयते। पुनर्निर्मन्थेत्। २।६.

अग्निमन्थनं वरुणप्रघासेषु। ५।३.

अग्निमन्थनं वा शुनासीर्ये। ५।८.

अग्निमन्थनं वैश्वदेवपर्वणि। ५।१.

अग्निमन्थनं साकमेधेषु। ५।५.

**अग्निमुपतिष्ठते** अत्रैव (सदसः पुरस्तात् स्तुतिमुत्तरेणैव) तिष्ठन् यथाऽग्निमुपतिष्ठते 'नमस्ते गायत्राय, नमस्ते राथंतराय' इत्यादि। चयनाभावे समिद्धस्याग्नेरेव एतान् भागानुपतिष्ठेत। कौआ. १।५.

**अग्निष्टोमः** आज्यप्रभृतिः आग्निमारुतान्तः। १६।९.

**अग्निष्टोमान्ते** अवभृथमवैति (सोमेनेष्ट्वा सौत्रामण्या यजेत, अवभृथमवैति यथा सोमे) मैत्रावरुण्या वा पयस्यया यजेत (सौत्रामण्या वा पयस्यया वा)। १६।१०.

**अग्निष्टोमे** यच्छस्यं (तस्य) त्रीणि षष्टिशतानि ऋचां संपद्यन्ते। १६।९.

**अग्निहोत्रं** न जुहोति दीक्षितः यज्ञे वितते। ७।३.

अग्निहोत्रं संयमनं प्रातर्दनं आन्तरं उपासनारूपम्। बाह्यं कर्ममयं तु पूर्वे विद्वांसो न जुहवांचक्रुः। कौआ.४।५.

अग्निहोत्रं सायं प्रातश्च जुहोति। २।१. अग्नये सायम्, सूर्याय प्रातः। पयसा जुहुयात्, अशनस्यैव जुहुयात्। गार्हपत्ये अधिश्रित्य आहवनीये जुहुयात्। व्यक्तानङ्गारान् करोति। अवज्योतयति। अपः प्रत्यानयति। पुनरवज्योतयति। त्रिरुपसादं उदग् होमीयमुद्वासयति। अनुच्छिन्दन्निव हरेत्। उपवेषेण दक्षिणतः अङ्गारानुपस्पृशति 'नमो देवेभ्यः' इति। सुपर्यूहान् अङ्गारान् प्रत्यूहेत्। चतुरुन्नयेत्। पञ्चकृत्व उन्नयेत्। २।१. उन्नीय उत्तरेण गार्हपत्यमुपसादयति। पालाशीं समिधमभ्यादधाति। प्रादेशमात्री भवति। द्व्यङ्गुलं समिधः अतिरिच्य अनुद्दमन्निव अभिजुहोति। धूमायन्त्यां ग्रामकामस्य जुहुयात्। ज्वलन्त्यां ब्रह्मवर्चसकामस्य। अङ्गारेषु पशुकामस्य। अभ्याधाय इति त्वेव स्थितम्। उभे आहुती हुत्वा जपति 'या यज्ञस्य समृद्धस्याशीः सा मे समृद्ध्यताम्' इति। उत्तरावतीराहुतीर्जुहुयात्। स्रुचो बुध्नेन अङ्गारानुपस्पृशति। द्विरुदीचीं स्रुचमुद्यच्छति। हूयमानस्योत्तरतो न तिष्ठेत्। स्रुचमुत्तरतः सायमुपमार्ष्टि। तत् कूर्चे निलिम्पति। दक्षिणत ऊर्ध्वाम्। दक्षिणेन कूर्चे उत्तानं पाणिं निदधाति। द्विः प्रदेशिन्या प्राश्नाति। स्रुचा भक्षयति। स्रुचं निर्लेढि। स्रुचं मार्जयते। प्रागुदीचीरप उत्सिञ्चति। प्रागुदीचीं स्रुचमुद्दिशति। २।२. आहवनीये एव जुहुयादिति हैके। सर्वेषु त्वेव जुहुयात्। चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, द्वे आहवनीये। २।३. हुत्वा अग्नीनुपतिष्ठते। वत्सं स्पृशति। आचम्य व्रतं विसृजते। २।४. सायं जुहोति 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति। प्रातर्जुहोति 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति। २।७–८. उदिते होतव्यऽऽऽम् अनुदिते इति मीमांसन्ते। २।९. अनुदिते होतव्यम्, संधौ जुहुयात्, सायमस्तमिते पुरा तमसो जुहुयात्, प्रातः पुरोदयात्, अपहते तमसि जुहुयात्, यदैव कदाचन जुहुयात्। २।९.

**अग्निहोत्रोपासनं** आध्यात्मिकम्। कौआ.१०।१–८.

**अग्नीत्** उक्थ्ये अन्तरेण पात्नीवतस्य यजति तृतीयसवने। ३०।१.

**अग्नीनां** संनिवापः सत्रे। दीक्षिष्यमाणाः अग्नीन् संनिवपन्ते। १९।१.

**अग्नीषोमप्रणयनं** अग्निष्टोमे। अग्नीषोमौ प्रणयन्ति। आसीन एव होता एतां प्रथमामनुब्रूयात् 'सावीर्हि देव, प्रथमाय पित्रे' इति सावित्रीम्। 'उत्तिष्ठ ब्रह्मणस्पते' इत्युत्थापयति। 'प्रैतु ब्रह्मणस्पतिः' इति प्रणयति। 'होता देवो अमर्त्यः, उप त्वाऽग्ने दिवेदिवे' इति तृचौ केवलाग्नेयौ अन्वाह। यत्र उपाधि गच्छेत् 'भूतानां गर्भमादधे' इति गर्भकामायै गर्भं ध्यायात्। आग्नीध्रीयेऽग्निं निदधति। यदाऽध्वर्युराहुतिं जुहोति, तां संप्रति एतामनुब्रूयात् 'अग्ने जुषस्व प्रतिहर्य तद्वचः' इति। तस्या एवैषा याज्या। ९।५.

अग्नीषोमप्रणयनं सत्रस्य प्रायणीयेऽतिरात्रे। १९।५.

**अग्नीषोमीयः** पशुः सत्रस्य प्रायणीयेऽतिरात्रे। १९।५.

**अग्न्याधेयम्** = पवमानेष्टिः, पावकेष्टिः, शुचीष्टिः, दक्षिणा । १।१.

**अङ्गिरसामयनम्** । १८।१०.

**अच्छावाकं न प्रवृणुते** । अच्छावाक एतस्यां दिशि ( पूर्वस्मिन्नवान्तरदेशे ) आसीनः उपहवमिच्छते । अच्छावाकाय पुरोडाशबृगलं परिहरन्ति । २८।४. अच्छावाकमध्वर्युराह 'अच्छावाक वदस्व, यत्ते वाद्यम्' इति । 'अच्छा वो अग्निमवसे' इत्याग्नेयीरन्वाह, अनुष्टुभो भवन्ति, तिस्रो भवन्ति । उत्तमायै तृतीयवचने प्रणवेन निगदमुपसंदधाति । २८।५. 'प्रत्यस्मै पिपीषते' इत्युन्नीयमानायान्वाह, चतस्रो भवन्ति अनुष्टुभः, बृहती उत्तमा भवति । 'प्रातर्यावभिरागतं' इत्यैन्द्राग्न्या यजति गायत्र्या । अनुवषट् करोति । २८।७.

अच्छावाकः ( भारद्वाजात् ) इतरौ पर्यासौ वैष्णवे विपर्यस्यति । एकपर्यासः अच्छावाकः । ३०।९.

अच्छावाकः एवयामरुतं शंसति, न्यूङ्खयति । ३०।८.

अच्छावाकः चतुर्विंशे ( अहनि ) चतुश्चत्वारिंशतं शंसति । प्रथमे छन्दोमे पञ्च सूक्तानि शंसति । षट्षट् उत्तरयोः । ३०।१०.

अच्छावाकश्च मैत्रावरुणश्च प्रातःसवने द्विदेवत्याः शंसतः । २८।९. तृतीयसवने द्विदेवत्याः शंसतः । वैश्वामित्रौ स्तोत्रियौ भवतः । वासिष्ठौ नवर्चौ पर्यासौ कुर्वतः । २८।१०.

अच्छावाकः छन्दोमेषु चत्वारिचत्वारि सूक्तानि शंसति । २९।८.

**अच्छावाकस्य** कालेयं पृष्ठं भवति । तद्वा ऐडं बृहतीषु कुर्वन्ति, अथैतान् सामप्रगाथान् शंसन्ति, पञ्चर्चमुक्थमुखं भवति । एकादशर्चः पर्यासः । भरद्वाजस्य विश्वामित्रस्य च शंसति, वैश्वामित्रः पर्यासः । इदं सर्वं प्रायणीयोदयनीययोः एकाहे च । २९।३.

अच्छावाकस्य कालेयं पृष्ठम्, षट्पदासु अच्छावाकाय प्रणयन्ति षष्ठेऽहन् । 'अभितष्टेव दीधया मनीषाम्' इत्यहरहः पर्यासः । २९।७.

अच्छावाकस्य प्रत्युपहवः 'प्रत्येता वामा सूक्ता०' इति । १३।८.

**अच्छावाकाय** अनुष्टुप्सु प्रणयन्ति तृतीयेऽहन् । ऋतुर्जनित्रीयं त्रयोदशर्चं द्विस्तावत् यावद् ब्राह्मणाच्छंसिनः । एकाचोप भारद्वाजः अहरहः पर्यासो भवति । ३०।९.

**अज्यमानाय** यूपायान्वाह 'अञ्जन्ति त्वामध्वरे देवयन्तः' इति । १०।२.

**अतिग्राह्यः** वैश्वकर्मणः महाव्रते । कौआ. २।१७.

**अतिरात्रमुपयन्ति** । १७।५. गायत्रान् स्तोत्रियानुरूपान् शंसन्ति, पुनरादायं शंसन्ति, एवं हि सामगाः स्तुवते । उत्तमात् प्रतिहारादूर्ध्वं आहूय साम्ना शस्त्रमुपसंतन्वन्ति । १७।६. प्रथमेषु पर्यायेषु प्रथमेषु पदेषु निनर्तयन्ति । १७।८. मध्यमेषु पर्यायेषु मध्यमेषु पदेषु निनर्तयन्ति, उत्तमेषु पर्यायेषु उत्तमेषु पदेषु निनर्तयन्ति स्तोत्रियानुरूपैः । गायत्राणि उक्थमुखानि शंसन्ति । गायत्रीः शस्त्वा जगतीः शंसन्ति । व्याह्वयन्ते । त्रिष्टुब्भिः परिदधति । याज्याः अन्धःस्वत्यो मद्वत्यः पीतवत्यस्त्रिष्टुभः । जागृयू रात्रीम् । आहवनीयं समिद्धं आग्नीध्रीयं गार्हपत्यं धिष्ण्यान् समुज्ज्वलयत इति भाषेरन् ( रात्रौ ) । आरेफन्तः शयीरन् । १७।९. आश्विनं शस्त्रम् । १८।१-५. संसन्नेषु छन्दोगेषु प्रवृत्तहोमीये आहुती जुहोति १८।५. हारियोजनेन चरन्ति । १८।६. शाकलान् जुह्वति । १८।७. अवभृथः । १८।८-१०. अनूबन्ध्या । यद्यु वै पयस्या, मित्रावरुणयोः पयस्या इति हि स्थिता । १८।११-१२. अथ यदि गोपशुर्भवति । १८।१३. उदवसानीया । तस्यां संस्थितायां यजमानः अग्निहोत्रं जुहोति । १८।१४.

**अतिरात्रे** एकशतं प्रयाजानुयाजा भवन्ति । १८।१०.

अतिरात्रे 'रात्रौ पञ्च' इत्यत्र द्रष्टव्यम् । ३०।११.

**अतिरिक्तोक्थं** वाजपेयस्य पञ्चाहावम् । ३०।११.

**अतिरिक्तोक्थानि** आप्तोर्यामस्य चतुराहावानि । ३०।११.

**अतीवादान्** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।७.

**अध्वर्युः** औदुम्भणानि यदा जुहोति, तदा यजमानोऽनुमन्त्रयेत 'मनो मे मनसा दीक्षताम्' इत्यादि पञ्चप्रतीकैः। केशिनी दीक्षा इत्यत्र द्रष्टव्यम्। ७।४.

अध्वर्युः स्तोत्रमुपाकरोति अतिरात्रे। १७।७.

अध्वर्यू ऋतुयाजेषु नान्योन्यमनुप्रपद्येते। १३।९.

**अनुक्रोशं नाम** साम महाव्रते। कौआ. १।४.

**अनुचरः** मरुत्वतीयस्य 'इदं वसो सुतमन्धः।' १५।२.

अनुचरः मरुत्वतीयस्य 'इदं वसो सुतमन्धः' चतुर्विंशेऽहनि। १९।८.

**अनुनिर्वाप्यः** वैमृधः पौर्णमास्याम्। ४।१.

**अनुप्रहरणं** स्थितिर्वा यूपस्य अग्निष्टोमे। तमाहुरनुप्रहरेत्, तदु वा आहुः तिष्ठेदेव। १०।२.

**अनुयाजाः** नव वरुणप्रघासेषु। ५।३. वैश्वदेवपर्वणि। ५।१. शुनासीरीये। ५।८. साकमेधेषु। ५।५.

अनुयाजाः। बर्हिष्मन्तमुत्सृजति पितृयज्ञे (पित्र्यायाम्)। ५।७.

**अनुयाजान्** त्रीन् यजति। सर्वमुत्तममाह (स्वरं)। दर्शपूर्णमासयोः। ३।८.

**अनुयाजौ** अवभृथे द्वौ यजति बर्हिष्मन्तमुत्सृजति। १८।१०.

**अनुरूपः**। स्तोत्रियान् शस्त्वा श्वःस्तोत्रियान् अनुरूपान् कुर्वन्ति। २८।१०.

**अनुवचने**। शस्त्रानुवचनयोर्मध्ये शुद्ध एव प्रणवः स्यात्, मकारान्तः अवसानार्थे। ११।५.

**अनुवषट्कारः** अतिरात्रे हारियोजनोत्तरम्। १८।६. आग्निमारुतशस्त्रयाज्योत्तरमग्निष्टोमे। १६।९. आज्यशस्त्रयाज्यावषट्कारान्ते। १४।२. आश्विनशस्त्रयाज्योत्तरम्। १८।५. छन्दोमेषु। २९।८. निष्केवल्यशस्त्रयाज्याऽन्ते। १५।५. प्रउगे। १४।५. प्रवृताहुतिषु। (अथेडा अथ होतृचमसः)। २८।३. प्रस्थितयाज्यासु। १३।६, १५।१, १६।१. मरुत्वतीयग्रहे। १५।१. मरुत्वतीयशस्त्रयाज्योत्तरम्। १५।३. वैश्वदेवशस्त्रयाज्योत्तरम्। १६।४.

अनुवषट्कारो नास्ति आदित्यग्रहे। १६।१. ऋतुयाजेषु। १३।९. द्विदेवत्येषु। १३।५. पात्नीवतग्रहे। १६।६. सावित्रग्रहे तृतीयसवने। १६।२.

**अनुवषट् कुर्वन्ति** उक्थयाज्योत्तरम्। ३०।१०. तृतीयसवने उन्नीयमानयाज्योत्तरम्। ३०।१.

**अनुव्याहाराः** प्राणो वंश इति ध्यानम्। कौआ. ७।९,१०.

**अनूकं शंसति** निष्केवल्यस्य महाव्रते। चतुरुत्तराणि शंसति ता एकविंशतिर्ऋचो भवन्ति, तानि सप्त तृचानि। कौआ. २।६. इन्द्राय मद्वने, इन्द्रं वृत्राय, गायन्ति त्वा, न त्वा बृहन्तो इति। शांश्रौ. १८।६.

**अनूबन्ध्या** अतिरात्रे, सा वै मैत्रावरुणी भवति, यद्यु वै पयस्या, मित्रावरुणयोः पयस्या इति हि स्थिता। यदि गोपशुर्भवति, याज्या वपायाः 'युवं वस्त्राणि पीवसा', याज्या पुरोडाशस्य 'यद् बंहिष्ठं नातिविधे', हविषः 'प्र बाहवा सिसृतं जीवसे नः'। १८।११–१३.

**अन्तर्यामग्रहः** 'उपांश्वन्तर्यामौ' इत्यत्र द्रष्टव्यम्। १२।४.

**अन्नाद्यकामः** बैल्वं यूपं कुर्वीत। १०।१.

**अन्नाद्यकामस्य** इळादधः नाम यज्ञः। ४।५.

अन्नाद्यकामस्य श्यामाकाग्रयणं, वेणुयवाग्रयणं, व्रीह्याग्रयणं, यवाग्रयणं च। ४।१२–१४.

**अन्वाहार्यमाहरन्ति**, एतद्दक्षिणौ वै दर्शपूर्णमासौ। ३।७.

**अप उपस्पृशति** अग्निं स्विष्टकृतं वषट्कृत्य दर्शपूर्णमासयोः। ३।६. आहवनीयोपस्थानान्ते होता शंयोर्वाकमाह अप उपस्पृशति। ३।९.

**अपनतः यूपः** नाम अशनायतो वा एतद्रूपं अभिनत इवोदरेण, अथाहवनीयं पुनरभ्यावृतः असौ त्याज्यः। (अधो बहिर्वक्रता अग्रं च आहवनीयमनु वलितम्)। १०।१.

अपराह्णे दीक्षते। ७।४.

**अपरिमितः** (अगृहीतमानः) एव यूपश्च वेदिश्च स्यात् इति ह स्माह (कौषीतकिः)। १०।१.

**अपोनप्त्रीयम्** 'प्र देवत्रा ब्रह्मणे गातुरेतु' इति पञ्चदशर्चं सूक्तं ( कवषः अपश्यत् ), अध्वर्युराहुतिं जुहोति तां संप्रति एतामनुब्रूयात् 'हिनोता नो अध्वरं देवयज्यया' इति। आवृत्तासु 'आववृततीरधनु द्विधारा'। प्रतिख्यातासु 'प्रति यदापो अदृश्रमायती:'। समायतीषु 'समन्या यन्त्युप यन्त्यन्या'। होतृचमसे अवनीयमानासु 'आपो न देवीरुपयन्ति'। 'आ धेनवः पयसा' ( इति आयतीषु ) अध्वर्युर्होतारमभ्यावृत्य तिष्ठति। तं होता पृच्छति 'अध्वर्यवैषीरपा३:' इति। 'उतेमनन्नमुः' इति प्रत्याह। प्रत्युक्तो होता एनं निगदं प्रतिपद्यते। १२।१. 'अम्बयो यन्त्यध्वभिः' इति। आगतासु 'एमा अग्मन् रेवतीर्जीव'। 'आग्मन्नाप उशतीर्बर्हि:' इति परिदधाति। पञ्चदशर्चं भवति। १२।२. ता वै विंशतिमन्वाह, त्रिः प्रथमया त्रिरुत्तमया चतुर्विंशतिः संपद्यन्ते। १२।३.

**अप्तोर्यामस्य** अतिरिक्तोक्थानि चतुराहावानि, क्षैत्रपत्याः परिधानीयाः कुर्वते। ३०।११.

**अप्सु** अग्नेः पवमानां तनूं देवा न्यदधुः। १।१.

**अप्सुमन्तौ** आज्यभागौ हैके कुर्वन्ति। वार्त्रघ्नौ त्वेव स्थितौ। अतिरात्रे। १८।१०.

**अभिजित्** ( सत्रे ) उभयसामा सर्वस्तोमो भवति, अग्निः अभिजित्। उभयानि सूक्तानि शस्यन्ते बार्हतराथंतराणि। आज्यम्। प्रउगः। मरुत्वतीयम्, निष्केवल्यम्, वैश्वदेवम्, आग्निमारुतम्। २४।१-२.

**अभिजिति** स्तोमातिशंसं प्रातःसवनेषु शस्त्वा अहीनसूक्तानि मध्यंदिनेषु शंसन्ति। २९।८.

**अभिप्लवः षडहः**। अग्निष्टोमौ प्रथमोत्तमे अहनी चत्वार्युक्थ्यानि मध्ये। चतुर्णामुक्थ्यानां सहस्रं स्तोत्रियाः। २१।५. द्विर्ज्योतिः द्विर्गौ द्विरायुरुपयन्ति। २०।१. सर्वजागतानि वै तस्य निविद्धानानि भवन्ति तृतीयसवने। तन्व्याः त्रिष्टुभः अहरहः शस्यन्ते, तन्व्या गायत्री अहरहः सुरूपकृत्नुः शस्यते। यद्वेवैषः ( यत् उ एव एषः ) षळहः पुनःपुनरभिप्लवते तस्मादभिप्लवो नाम। २१।६.

**अभिप्लवमुपयन्ति षडहं सत्रे चतुर्विंशोत्तरम्।** ज्योतिः प्रथममहरुपयन्ति, गां द्वितीयमहरुपयन्ति, आयुस्तृतीयमहरुपयन्ति। २०।१-४. गां चतुर्थमहरुपयन्ति, आयुः पञ्चममहरुपयन्ति, ज्योतिः षष्ठमहरुपयन्ति। २१।१-४.

**अभिषवः**। दक्षिणा एवैनं ( सोमं ) आसीना अभिषुण्वन्ति। ७।६.

**अभिष्टवनम्**। दक्षिणा तिष्ठन् अभिष्टौति। ७।६.

**अभ्यञ्जनं यूपस्य** अग्निष्टोमे। अथैनमभ्यञ्जन्ति, स्वभ्यक्तं स्वयमेव यजमानः कुर्वीत। १०।१.

**अभ्युदितेष्टिः**। एति ह वा एष यज्ञपथात् यस्योपवसथे पुरस्ताच्चन्द्रो दृश्यते। सोऽग्नये दात्रेऽष्टाकपालं पुरोडाशं निर्वपति, इन्द्राय प्रदात्रे सायं दोहितं दधि, विष्णवे शिपिविष्टाय प्रातर्दोहिते पयसि चरुम्। तिसृधन्वं दक्षिणा। ४।२.

**अभ्युदृष्टेष्टिः**। एति ह वा एष यज्ञपथात् यस्योपवसथे पश्चाच्चन्द्रो दृश्यते, सोऽग्नये पथिकृते अष्टाकपालं पुरोडाशं निर्वपति, इन्द्राय वृत्रघ्ने एकादशकपालम्, वैश्वानरीयं द्वादशकपालम्। दण्डोपानहं दक्षिणा। ४।३.

**अमावास्यायां** अनिर्ज्ञाय पुरस्ताच्चन्द्रमसमुपवसति। ३।१.

अमावास्यायां वृधन्वन्तौ आज्यभागौ। ३।५.

**अयमात्मा ब्रह्म**। कौआ. १३.

**अरण्योः समारोहः**। अरण्योरग्नीन् समारोहयते ( प्रवासे ) पुनर्निर्मथ्यते। २।६.

**अर्कं नाम** साम महाव्रते। कौआ. १।४.

**अर्कपुष्पं नाम** साम महाव्रते। कौआ. १।४.

**अर्घ्यप्रदानं** आदित्याय उपस्थानं च प्रातर्मध्यंदिनं सायम्। कौआ. ४।७.

**अर्बुदेन** च पावमानीमिश्रं ग्राव्णोऽभिष्टौति, प्राक् माध्यंदिनपवमानात्। १५।१.

**अवभृथः** अग्निष्टोमान्ते। सोमेनेष्ट्वा सौत्रामण्या यजेत अवभृथमवैति यथा सोमे। १६।१०.

अवभृथः। अप्सु वरुणं यजति, वरुणप्रघासेषु। ५।४.

अवभृथः। सव्यावृतः अप्सु सोमानुपप्लावयन्ति। तान् इह अन्तर्वेदि आसादयन्ति। व्यवदधति दर्भपिञ्जूलानि। वैष्णव्यर्चा निनयन्ति। अथ प्राणान् संमृशन्ति, वारुणमेककपालं पुरोळाशं निर्वपति। अन्तरेण चात्वालोत्करौ उपनिष्क्रामति। यस्यां दिशि आपो भवन्ति, तां दिशमभ्यावृत्य चरन्ति। चतुरः प्रयाजान् यजति, बर्हिष्मन्तमुत्सृजति। वार्त्रघ्नावाज्यभागौ भवतः। अप्सुमन्तौ हैके कुर्वन्ति, वार्त्रघ्नौ त्वेव स्थितौ। अप्सु वरुणं यजति, अग्नीवरुणौ यजति। द्वौ अनुयाजौ यजति, बर्हिष्मन्तमुत्सृजति। १८।९–१०.

**अविवाक्यं** दशममहः (नात्र किञ्चित् केनचित् कस्मैचित् विवेक्तव्यम्) तदु वा आहुः ब्येव ब्रूयात्। यदि कश्चित् प्रमत्त उपहन्यात्, यः तदधीयात् स तं देशं पार्श्वतः स्वाध्यायं शंसेत्। यदि तथा न मन्येत संप्रत्येव विब्रूयात्। आज्यं, प्रउगं, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २७।१–२.

**अशीतयः** निष्केवल्ये महाव्रते। गायत्री, बार्हती, औष्णिही। 'महाँ इन्द्रो य ओजसा' गायत्री, 'या इन्द्र भुज आभर' बार्हती, 'इन्द्र सुतेषु सोमेषु' औष्णिही। 'गायत्री अशीतिः' इत्यत्र द्रष्टव्यम्। कौआ. २।८–१०.

**अश्वं** त्रयोदशं ददाति। अग्न्याधेयस्य द्वादश दक्षिणाः अश्वं त्रयोदशं ददाति। १।१

**अष्टाश्रिः यूपः**। सोऽष्टाश्रिर्निष्ठितो भवति। १०।१.

**अहं ब्रह्मास्मि**। कौआ. १३.

**अहरहः पर्यासः**। मैत्रावरुणस्य कार्ष्णः अहरहः पर्यासो भवति। ३०।९.

अहरहः भारद्वाजः पर्यासः ब्राह्मणाच्छंसिनः भवति। ३०।९.

अहरहः शंसन्ति ऐन्द्राणि जागतानि, तानि अच्युतानि स्युरिति हैक आहुः सवनधरणानि इति वदन्तः, अन्यान्यन्यानि इति त्वेव स्थितम्। अथ वारुणं बार्हस्पत्यं वैष्णवमिति शंसन्ति। ऐन्द्रावरुणं ऐन्द्राबार्हस्पत्यं ऐन्द्रावैष्णवं इति शंसन्ति। एवं हि ग्रहा गृहीता भवन्ति। ३०।२.

अहरहः शस्यानि। वामदेव्यं मैत्रावरुणस्य अहरहः पृष्ठं भवति। कद्वतः प्रगाथान् अहरहः शंसन्ति। तन्व्याः त्रिष्टुभः उक्थ्यप्रतिपदः अहरहः शस्यन्ते 'अप प्राच इन्द्र विश्वाँ अमित्रान्' इति सौकीर्तिं मैत्रावरुणः। यदार्षेये सूक्ते, तदार्षेये उक्थमुखीये इतरयोः (ब्राह्मणाच्छंसि–अच्छावाकयोः)। 'ब्रह्मणा ते ब्रह्म युजा युनज्मि, उरुं नो लोकमनु नेषि विद्वान्' इत्युक्थमुखीये। २९।४.

**आग्नावैष्णवं** एकादशकपालं पुरोडाशं निर्वपन्ति दीक्षणीयायामग्निष्टोमे। ७।१.

**आग्निमारुतं** अग्निष्टोमे तृतीयसवने एकविंशत्याह्वावम्। वैश्वानरीयं शंसति। रौद्रीं शंसति, एनामन्ते शस्त्रे शंसति। मारुतं शंसति। यज्ञायज्ञीयस्य स्तोत्रियानुरूपौ शंसति। जातवेदसीयं शंसति। आपोदेवत्याः शंसति, एना आरतं (शनैः) शंसेत्। अहिर्बुध्न्यं शंसति। देवानां च पत्नीः राकां च शंसति। अक्षरपङ्क्तीः शंसति। पैत्रीश्च यामीश्च शंसति, एना अन्ते शस्त्रे शंसति। स्वादुष्किलीयाः शंसति, तासु अध्वर्युः मद्वत् प्रतिगृणाति। वैष्णुवारुणीं शंसति। वैष्णवीं च आग्नेयीं च शंसति, एते अन्ते शस्त्रे शंसति। ऐन्द्या परिदधाति। याज्या आग्निमारुती जागती मद्वती 'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः'। अनुवषट् करोति। १६।७–९.

आग्निमारुतं अभिप्लवषडहे। **प्रथमेऽहनि** ज्योतिषि। वैश्वानरीयम् 'वैश्वानराय पृथुपाजसे विपः'। मारुतम् 'प्र त्वक्षसः प्रतवसो'। जातवेदसीयम् 'एति प्र होता व्रतमस्य मायया'। २०।२. **द्वितीयेऽहनि** गवि वैश्वानरीयम् 'पृक्षस्य वृष्णो अरुषस्य नू सहः'। मारुतम् 'वृष्णे शर्धाय सुमखाय'। जातवेदसीयम् 'यज्ञेन वर्धत जातवेदसम्'। २०।३. **तृतीयेऽहनि** आयुषि वैश्वानरीयम् 'वैश्वानराय धिषणा'। मारुतम् 'आ रुद्रास इन्द्रवन्तः सजोषसः'। जातवेदसीयम् 'त्वामग्न ऋतायवः समीधिरे'। २०।४. **चतुर्थेऽहनि** गवि वैश्वानरीयम् 'वैश्वानराय पृथुपाजसे।' मारुतम् 'प्र ये शुम्भन्ते जनयो न'। जातवेदसीयम् 'जनस्य गोपा अजनिष्ट'। २१।२. **पञ्चमेऽहनि** आयुषि वैश्वानरीयम्, 'पृक्षस्य वृष्णो अरुषस्य'। मारुतम् 'प्र वस्पळक्रन् सुविताय'।

जातवेदसीयम् ‘ चित्र इच्छिशोस्तरुणस्य ’ । २१।३. षष्ठेऽहनि ज्योतिषि वैश्वानरीयम् ‘ वैश्वानराय धिषणामृतावृधः’ । मारुतम् ‘ धारावरा मरुतो ’ । जातवेदसीयम् ‘ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः ’ । २१।४.

आग्निमारुतं अविवाक्ये दशमेऽहनि । विराट्सु वामदेव्यं अग्निष्टोमसाम भवति । समूढस्य अतिरिक्तोक्थमुपयन्ति । यथा सहस्रं च पञ्चदश च अनुष्टुभः स्युस्तथा एतदहः संपादयेत् । अथ व्यूढस्य अतिरिक्तोक्थमुपयन्ति । २७।२–४.

आग्निमारुतं चतुर्विंशेऽहनि । वैश्वानरीयम् ‘ वैश्वानराय धिषणा ’ । मारुतम् ‘ वृष्णे शर्धाय सुमखाय ’ । जातवेदसीयम् ‘ यज्ञेन वर्धत जातवेदसम् । ’ १९।९.

आग्निमारुतं छन्दोमेषु प्रथमे । वैश्वानरीयम् ‘ वैश्वानरो न ऊतये ’ । मारुतम् ‘ प्र यद्वस्त्रिष्टुभमिषम् ’ । जातवेदसीयं गायत्रं, ‘ अर्चन्तस्त्वा हवामहे ’ । २६।१०. द्वितीये वैश्वानरीयं ‘ वैश्वानरो अजीजनत् ’ । मारुतं ‘ कद्ध नूनं कध प्रिय ’ । जातवेदसीयं ‘ दूतं वो विश्ववेदसं ’ ‘ अग्ने मृळ महाँ असि ’ इति वा अष्टर्चम् । पूर्वं तु स्थितम् । २६।१३. तृतीये वैश्वानरीयं ‘ दिवि पृष्टो अरोचत ’ ( शांश्रौ. १०।११।९ ) । मारुतं ‘ मरुतो यस्य हि क्षये ’ । जातवेदसीयं गायत्रम् ‘ अग्निर्होता पुरोहितः ’ । २६।१७.

आग्निमारुतं पृष्ठ्ये षडहे । प्रथमेऽहनि व्यूढे समूढे च । वैश्वानरीयं ‘ वैश्वानराय पृथुपाजसे ’ । मारुतं ‘ प्र शर्धाय मारुताय ’ । जातवेदसीयं ‘ प्र तव्यसीं नव्यसीम् ’ । २२।१. द्वितीयेऽहनि व्यूढे समूढे च । वैश्वानरीयं ‘पृक्षस्य वृष्णो अरुषस्य’ । मारुतं ‘वृष्णे शर्धाय सुमखाय ’ । जातवेदसीयं ‘ नू चित् सहोजा अमृतो ’ । २२।२. तृतीयेऽहनि व्यूढे समूढे च वैश्वानरीयम् ‘वैश्वानराय धिषणा ’ । मारुतम् ‘ धारावरा मरुतो ’ । जातवेदसीयम् ‘ त्वमग्ने प्रथमो अङ्गिरा ऋषिः ’ । २२।५. चतुर्थेऽहनि व्यूढे समूढे च वैश्वानरीयम् ‘ प्र सम्राजो असुरस्य ’ । मारुतम् ‘ क ईं व्यक्ता नरः सनीळाः ’ । जातवेदसीयम् ‘ हुवे वः सुद्योत्मानम् ’ । ‘ प्र यन्तु वाजास्तविषीभिरग्नयः ’ इति तिस्रोऽधिकाः समूढे । ‘ वसुं न चित्रमहसं गृणीषे ’ इति जातवेदसीयं समूढे । २२।९. पञ्चमेऽहनि वैश्वानरीयं ‘ हविष्पान्तमजरं स्वर्विदि ’ । मारुतम् ‘ वपुर्नु तच्चिकितुषे ’ । जातवेदसीयं ‘ अग्निर्होता गृहपतिः स राजा ’ इति व्यूढे । अथ समूढे वैश्वानरीयं ‘मूर्धानं दिवो अरतिम्’ । आ रुद्रास इन्द्रवन्तः । जातवेदसीयं ‘ इममू षु वो अतिथिं ’ । २३।३. षष्ठेऽहनि व्यूढे समूढे च वैश्वानरीयं ‘ अहश्च कृष्णमहरर्जुनं च ’ । मारुतं ‘ प्र यज्यवो मरुतो भ्राज ’ । जातवेदसीयं ‘ इमं स्तोममर्हते जातवेदसे ’ । २३।८.

आग्निमारुतं महाव्रते वैश्वानरीयं ऐकाहिकम् । ऐकाहिके निविदं दधाति । मारुतं ‘ प्र यज्यवो मरुतो भ्राज ’ । जातवेदसीयं ‘ बळित्था तद्वपुषे धायि दर्शतम् ’ । ‘आस्ताव्यग्निः शिमीवद्भिरर्कैः ’ इत्युत्तमा । कौआ. २।१८.

आग्निमारुतं विषुवति अहनि वैश्वानरीयं ‘ वैश्वानराय धिषणा ’ । मारुतं ‘ प्र यज्यवो मरुतो ’ । जातवेदसीयं ‘ वेदिषदे प्रियधामाय ’ । २५।९.

आग्निमारुतं विश्वजिति सत्रगते । यद्धि षष्ठस्याह्नस्तृतीयसवनं, तत्तृतीयसवनम् । ऐकाहिकी प्रतिपत्, अभिवान् अनुचरः । तृतीयसवने शिल्पानि शस्यन्ते । आग्निमारुते रौद्रीं शस्त्वा होता एवयामरुतं पङ्क्तिशंसं शंसति । तिसृषु अस्य न्यूङ्खयेत्, न्यूङ्खयितुं चेदाद्रियेत सर्वास्वेव न्यूङ्खयेत् । २५।११–१३.

आग्निमारुतं स्वरसामसु । यानि पृष्ठ्यषडहसमूढस्य उत्तरत्र्यहस्य तृतीयसवनानि, तानि तृतीयसवनानि । २४।९.

**आग्नीध्रः** ‘ उक्षान्नाय वशान्नाय ’ इति यजति । प्रस्थितयाज्येयम् । २८।३.

आग्नीध्रः यजति पात्नीवतग्रहे । १६।६.

**आग्नीध्रीये** अग्निं निदधति अग्नीषोमप्रणयने अग्निष्टोमे । ९।५.

**आग्नेयं** सर्वं पुनराधेयकमित्येके । तन्न । १।५.

**आग्रयणम्** । श्यामाकाग्रयणम् । ४।१२. वेणुयवाग्रयणम् । ४।१३. व्रीह्याग्रयणं यवाग्रयणं च । ४।१४.

**आग्रयणस्य** श्यामाक–वेणुयव–व्रीहि–यवानामिष्टेरसंभवे पौर्णमासं वा आमावास्यं वा हविः कुर्वीत ।

पौर्णमासे वा आमावास्ये वा हवींषि अनुवर्तयेत् । यवाग्वा सायंप्रातरग्निहोत्रं जुहुयात् । स्थालीपाकमेव गार्हपत्ये श्रपयित्वा आग्रयणदेवताभ्यः आहवनीये जुहुयात् स्विष्टकृच्चतुर्थीभ्यः 'अमुष्यै स्वाहा, अमुष्यै स्वाहा' इति । अपिवा अग्निहोत्रीमेव नवान् आदयित्वा तस्यै दुग्धेन सायंप्रातरग्निहोत्रं जुहुयात् । त्रिहविस्तु स्थितः । ४।१४.

आज्यं ( शस्त्रं ) अभिजिति सत्रगते, 'प्र वो देवायाग्नये' इति राथंतरम्, 'यद्वाहिष्ठं तदग्नये' इति बार्हतं इत्युभे आज्यम् । २४।१.

आज्यं अभिप्लवषडहे । प्रथमेऽहनि ज्योतिषि, 'प्र वो देवायाग्नये' । २०।२. द्वितीयेऽहनि गवि 'त्वं हि क्षैतवद्यशो' । २०।३. तृतीयेऽहनि आयुषि 'त्वमग्ने वसूँरिह' । २०।४. चतुर्थेऽहनि गवि 'होताऽजनिष्ट चेतनः' । २१।२. पञ्चमेऽहनि आयुषि 'अग्न ओजिष्ठमा भर' । २१।३. षष्ठेऽहनि ज्योतिषि 'सखायः सं वः सम्यञ्चः' । २१।४.

आज्यं अविवाक्ये, 'अग्ने तमद्याश्वं न स्तोमैः ।' २७।२.

आज्यं ( द्रव्यं ) आग्नेयम् । १।२.

आज्यं चतुर्विंशेऽहनि, 'होताऽजनिष्ट चेतनः' अष्टर्चं गायत्रम् । १९।८.

आज्यं छन्दोमे प्रथमे । 'प्र वः शुक्राय भानवे भरध्वम्' । २६।८. द्वितीये अग्निं वो देवमग्निभिः सजोषाः' । २६।११. तृतीये 'अगन्म महा नमसा' इति वासिष्ठम्, 'सोमस्य मा तवसम्' इति वैश्वामित्रम् इत्युभे आज्यम् । 'अगन्म महा नमसा' इत्येतदेव तृचं आज्यं स्यादिति पैङ्ग्यः, उभे एव स्यातामिति कौषीतकिः । २६।१४.

आज्यं पृष्ठ्ये षडहे । प्रथमेऽहनि व्यूढे 'उप प्र यन्तो अध्वरम्' । समूढे 'प्र वो देवायाग्नये' । २२।१. द्वितीयेऽहनि व्यूढे 'अग्निं दूतं वृणीमहे' । समूढे 'त्वं हि क्षैतवद्यशो' । २२।२. तृतीयेऽहनि व्यूढे 'युक्ष्वा हि देवहूतमान्' । समूढे 'त्वमग्ने वसूँरिह' । २२।३. चतुर्थेऽहनि व्यूढे 'अग्निं न स्ववृक्तिभिः' वैमदं, ता दश जगत्यः संपद्यन्ते, विंशतिर्गायत्र्यः । समूढे 'अग्निं नरो दीधितिभिः' वैराजं आज्यं वैराजं पृष्ठम्, वासिष्ठं आज्यं वासिष्ठं पृष्ठम् । २२।६-७. पञ्चमेऽहनि व्यूढे, 'इमम् षु वो अतिथिम्' इति जागतम् । समूढे, 'अग्निं तं मन्ये यो वसुः' इति पाङ्क्तम् । २३।१. षष्ठेऽहनि, 'अयं जायत मनुषो धरीमणि' इत्यतिच्छन्दसः सप्तपदाः । न पदं च पुनःपदं चान्तरेणावान्यात् । २३।६.

आज्यं महाव्रते, 'विशोविशो वो अतिथिम्' इति द्वादशर्चं, तस्मिन् द्वे छन्दसी भवतः गायत्र्यश्च अनुष्टुभश्च 'अग्निं नरो दीधितिभिररण्योः' इति पञ्चविंशत्यृचमुपसंशंसति, तस्मिन् द्वे छन्दसी भवतः विराजश्च त्रिष्टुभश्च । कौआ. १।२.

आज्यं विश्वजिति सत्रगते, 'अग्निं नरो दीधितिभिः' । २५।११. प्राजापत्यानि अनिरुक्तानि होत्रकाणामाज्यानि भवन्ति । 'ता नः शक्तं पार्थिवस्य' 'युञ्जन्ति ब्रध्नमरुषं' 'ता हि शश्वन्त ईळते' 'तमीळिष्व यो आर्चिषा' इति वा स्तोत्रियाः । षष्ठस्याह्नः स्तोत्रियाननुरूपान् कुर्वीरन् । पर्यासैः परिदधति । २५।१५.

आज्यं विषुवति सत्रगते, 'समुद्रादूर्मिर्मधुमान्' । तदाहुः न त्रैष्टुभं प्रातःसवनं स्यात् ( किन्तु ) 'प्र वो देवायाग्नये' 'त्वं हि क्षैतवद्यशः' इत्येते उभे, तदाज्यमिति । २५।१,३.

आज्यं शस्त्रं एकदेवत्यम् । २८।९.

आज्यं शस्त्रं पवमानोक्थम्, प्रउगं च आज्योक्थम् । १४।४.

आज्यं शस्त्रं षडविधम् तूष्णींजपः, तूष्णींशंसः, पुरोरुक्, सूक्तम्, उक्थवीर्यम्, याज्या चेति । प्र वो देवायाग्नये इति सप्तर्चं आज्यं शंसत्यानुष्टुभम् । पदे ( आद्ये द्वे ) विगृह्णाति, तत् अनवानं संक्रामेत् । समस्तेनोत्तरेणार्धर्चेन प्रणौति । त्रिः प्रथमया त्रिरुत्तमया एकादश संपद्यन्ते । आग्नेन्द्या यजति । त्रयस्त्रिंशदक्षरा विराट् । 'अग्न इन्द्रश्च दाशुषो दुरोणे' इति, पदं परिशिष्य विराजोऽर्धर्चे अवानिति । उत्तरेण विराजोऽर्धर्चेन वषट् करोति । अनुवषट् करोति । १४।१-२.

आज्यं स्वरसामानि प्रथमे, 'आ यज्ञैर्देव मर्त्यः' इति राथंतरम् । द्वितीये 'बृहद्वयो हि भानवः' इति

वार्हतम् । तृतीये, 'अग्न ओजिष्ठ आ भर' इति राथंतरम् । २४।५.

आज्यभागः पुनराधेये पूर्वौ वार्त्रघ्नः पूर्णमासतन्त्रत्वात् । 'अग्निं स्तोमेन बोधय' इत्यग्नये बुद्धिमते पूर्वं कुर्यादिति हैक आहुः । वार्त्रघ्नस्त्वेव स्थितः । 'अग्न आयूंषि पवसे' इत्युत्तरस्य पुरोऽनुवाक्या, पवसे इति सौम्यं रूपम् । १।४.

आज्यभागौ जीवनवन्तौ पितृयज्ञे ( पिन्यायां ), 'आ नो अग्ने सु चेतुना' 'त्वं सोम महे भगम्' । ५।७.

आज्यभागौ पोषवन्तौ गृहमेधीये, 'अग्निना रयिं' 'गयस्फानो' । ५।५.

आज्यभागौ पौर्णमास्यां वार्त्रघ्नौ 'अग्निर्वृत्राणि' 'त्वं सोमासि' । अमावास्यायां वृधन्वन्तौ 'अग्निः प्रत्नेन' 'सोम गीर्भिः' । तौ वै जुषाणयाज्यौ भवतः । तौ वै त्रिवृतौ भवतः, येयजामहो, निगदो वषट्कार इति । तौ न पशौ, न सोमे करोति । आवत्यो हूतवत्यः पुरोऽनुवाक्या भवन्ति, प्रवत्यः प्रत्तवत्यो याज्याः । ऋगन्ते वषट् करोति । पुरस्ताद्दीर्घं उपरिष्टात् ह्रस्वम् । भूर्भुव इति पुरस्तात् येयजामहस्य जपति । 'ओजः सहः सह ओजः स्वः' इत्युपरिष्टात् वषट्कारस्य । ३।५.

आज्यभागौ वार्त्रघ्नौ अग्निष्टोमे दीक्षणीयायाम् । ७।२.

आज्यभागौ वार्त्रघ्नौ अवभृथे । १८।१०. आतिथ्यायां च पौर्णमासतन्त्रत्वात् । अतिथिमन्तौ हैके कुर्वन्ति, जुषाणयाज्यौ त्वेव स्थितौ । सोमं सन्तं विष्णुमिति यजन्ति, जुह्वति, भक्षयन्ति । ८।२.

आज्यभागौ सद्वन्तौ ( 'त्वमग्ने सप्रथाः' 'सोम यास्ते' ) पवमानेष्टिषु तिसृष्वपि । १।१. वरुणप्रघासेषु । ५।३. वैश्वदेवपर्वणि । ५।१. शुनासीर्ये । ५।८. श्यामाकवेणुयवव्रीहियवाग्रयणेषु । ४।१२. मरुतः क्रीळिनः इत्यत्र । ५।५.

आतिथ्या अग्निष्टोमे । आसन्ने हविषि आतिथ्ये अग्निं मन्थन्ति । ८।१. सप्तदश सामिधेनीरन्वाह । वार्त्रघ्नौ आज्यभागौ, पौर्णमासं तन्त्रम् । अतिथिमन्तौ हैके कुर्वन्ति, वार्त्रघ्नौ त्वेव स्थितौ । ऋग्याज्यौ स्यातामिति हैक आहुः, जुषाणयाज्यौ त्वेव स्थितौ । सोमं सन्तं विष्णुमिति यजन्ति जुह्वति भक्षयन्ति । त्रिष्टुभौ हविषो याज्यापुरोऽनुवाक्ये । संयाज्ये त्रिष्टुभौ आग्नेय्यौ 'होतारं चित्ररथमध्वरस्य' 'यस्त्वा स्वश्वः सुहिरण्यो अग्ने' इति । इळाऽन्तं भवति । उपांशुः । ८।२.

आतिथ्या पञ्चहविः इत्येके । १९।४.

आत्मा निष्केवल्यस्य महाव्रते । 'तदिदास भुवनेषु' इति स्तोत्रियः तृचः नदेन सहितः अन्ते सूददोहाश्चेति । कौआ. २।१.

आत्मा । नेति नेत्यात्मा । कौआ. १३.

आत्मा प्राणः, प्राणः आत्मा । न वा अन्तरेण आत्मानं प्राणाः ख्यायन्ते, न प्राणानन्तरेणात्मा नो एतन्नाना । २५।१२.

आत्मा । सूर्य आत्मा जगतस्तस्थुषश्च । कौआ. ८।४–५.

आदित्यग्रहः पवमानः पशुः हविष्पङ्क्तिः उन्नीयमानाः प्रस्थितयाज्याः इळा होतृचमसः इति क्रमः तृतीयसवने । १६।१.

आदित्यग्रहस्य त्रिष्टुभमनूच्य त्रिष्टुभा यजति । १६।१.

आदित्यग्रहेण तृतीयसवनं प्रतिपद्यते, आदित्यग्रहस्य त्रिष्टुभं पुरोऽनुवाक्यामन्वाह । ३०।१.

आदित्यग्रहे नानुवषट् करोति । १६।१.

आदित्या अदितिदेवताका पुनराधेये द्वितीयेष्टिः । १।५.

आदित्याङ्गिरसीरुपसंशंसति, अश्वः श्वेतो दक्षिणा । ब्राह्मणाच्छंसी । षष्ठेऽहन् । ३०।६.

आदित्यानां तृतीयसवनम् ३०।१.

आदित्यानामयनं नाम सत्रम् । १८।१०.

आदित्ये देवाः अग्नेः शुचिं तनूं न्यदधुः । १।१.

आदित्योपस्थानं प्राञ्चः उपनिष्क्रम्य पितृयज्ञे ( पिन्यायां ) । ५।७.

आपोनप्त्रीयम् । १२।१–३.

'आप्नानं तीर्थं क इह प्रवोचत्' इत्यृचा अभ्युदितं, चात्वालोत्करौ अन्तरेण तीर्थं आप्नानं नाम । १८।९.

आप्रीसूक्तं वासिष्ठं विषुवति अहनि । २५।१०.

**आयुः** तृतीयमहः अभिप्लवषडहे । आज्यं , प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम् । २०।४.

**आयुः** नाम क्रतुः । गोआयुषोर्मीमांसा इत्यत्र द्रष्टव्यम् । २६।२.

आयुः पञ्चममहः अभिप्लवषडहे । आज्यं , प्रउगः, मरुत्वतीयं, निष्केवल्यं , वैश्वदेवं, आग्निमारुतम् । २१।३.

**आयुष्कामस्य** होमाः । कौआ. ११।४-८.

**आर्षेयम्** । यजमानस्यार्षेयं नाह पित्र्यायाम् । ५।६.

**आवाहननिगदे** वनस्पतिः । आवह देवान् यजमानाय, अग्निमग्न आवह, वनस्पतिमावह, इन्द्रं वसुमन्तमावह, इति प्रातःसवने । इन्द्रं रुद्रवन्तमावह इति माध्यंदिने । इन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं इति तृतीयसवने । एके तु अन्ततः वनस्पतिमावाहयन्ति, तृतीयसवने ह्येनं यजन्तीति वदन्तः । परन्तु पशुमेवोपसंधाय वनस्पतिरावाह्यः । १२।७.

**आशीर्वती** ऋक् ' सूयवसाद् भगवती ' इति प्रवर्ग्ये उत्तरे परिधानीया । ८।७.

**आश्विनं** शस्त्रमतिरात्रे । पुरस्तादश्विनौ यजति । सहस्रं शंसेत् । १८।१. न सहस्रमति शंसेत् नार्वाक् सहस्रादित्येषा हैव स्थितिः । १८।३. त्रिष्टुभा प्रतिपद्यते । बार्हतीनां प्रतिपदां प्रथमंप्रथमं प्रगाथं पुनरादायं ककुप्कारं शंसति सामगानुसारात् । आग्नेयं, उषस्यं, आश्विनं, सौर्यं, क्रतुं शंसति । प्रगाथं, द्यावापृथिवीयं, द्विपदां शंसति । बार्हस्पत्यया परिदधाति । १८।२. यद्याग्नेयं क्रतुं, पुरा कालात् समतीयात् आश्विनमनु यत्किञ्चित् द्विदेवत्यमृक्षुस्तदनुवर्तयेत् । सौर्ये क्रतौ पावमानीर्यथाच्छन्दसं , गायत्रीर्गायत्रे , त्रिष्टुभस्त्रैष्टुभे , जगतीर्जागते , सर्वं सौर्यं न्यङ्गं सौर्यस्यायतने , सर्वानैन्द्रान् प्रगाथान् प्रगाथस्यायतने, सर्वं द्यावापृथिवीयं द्यावापृथिवीयस्यायतने, सर्वा द्विपदा द्विपदाया आयतने, सर्वं बार्हस्पत्यं पुरस्तात् परिधानीयायाः । एतद्वै किञ्चिदिव ऋचां न प्रदृश्यते । १८।३ द्विरेवाश्विनायाह्वयते प्रतिपदे चैव परिधानीये च । यदाऽऽदित्यो रराट्यामतिसर्पेत् , यदैनं होता स्वयं निर्जानीयात्, यदास्य लोहितमापीयात् यदैनं सर्वे रश्मयः प्रत्युत्पद्येरन्, स कालः परिधानस्य । १८।४. द्वाभ्यां यजेत्, अनवानं गायत्रीमुक्त्वा विराजोऽर्धर्चे अवानिति, उत्तरेण विराजोऽर्धर्चेन वषट् करोति । विराजैव यजेदिति ह स्माह कौषीतकिः । ' अश्विना वायुना युवं सुदक्षा ' इति त्वेव स्थिता आश्विनी त्रिष्टुप् तिरोअह्न्यवती । १८।५. ( उभा पिबतम् , प्र वा मन्धांसि ' इत्यध्यर्धो संधाय अर्धर्चेन वषट् करोति । शांखायनश्रौत. ९।२०।३२, विराजैवेति । कौषीतकिः ३३, अश्विना वायुनेति वा । ३४ ) । अनुवषट् करोति । १८।५.

**आश्विनस्य** सर्वतः परिहारं सकृद् भक्षयति । १३।६.

**आश्विनोक्थ्यग्रहस्य** पुरोऽनुवाक्यां तिरोअह्न्यवर्ती त्रिष्टुभमन्वाह । तिरोअह्न्यवान् प्रैषः । ३०।११.

**आसिक्तवती ऋक्** ' आ सुते सिञ्चत, आ नूनमश्विनोः ' द्वे । प्रवर्ग्ये । ८।७.

**आह्नस्याः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।७.

**आहवनीयमु**पतिष्ठते, उदङ्ङः परेत्य पितृयज्ञे । ५।७.

आहवनीयमुपतिष्ठते, होता वेदातिशेषोपस्थानान्ते, दर्शपूर्ण० । ३।९.

**आहवनीये** । गार्हपत्ये अधिश्रित्य आहवनीये जुहुयादग्निहोत्रम् । २।१.

**आहावः** अतिरात्रे उत्तमात् प्रतिहारात् ऊर्ध्वमाहूय साम्ना शस्त्रमुपसंतन्वन्ति । १७।६.

आहावः । अप्तोर्यामस्य अतिरिक्तोक्थानि चतुराहावानि । ३०।११.

आहावः । आश्विने शस्त्रे द्विरेवाह्वयते प्रतिपदे च परिधानीयायै च । १८।४.

आहावः । एकविंशत्याहावं आग्निमारुतं शस्त्रम् । १६।७.

आहावः । चतुराहावानि उक्थ्ये शस्त्राणि । १६।११.

आहावः । चतुराहावानि शस्त्राणि उत्सर्गतः । २८।१०.

आहावः । चतुराहावानि षष्ठे एवाहन् , मैत्रावरुणस्य पञ्चाहावं भवति । ३०।१०.

आहावः । त्रिरेव षोळशिने आह्वयते स्तोत्रियायै निविदे परिधानीयायै । १७।३.

आहावः । त्रिरेवाह्वयते निष्केवल्ये महाव्रते । कौआ. २।१७.

आहावः । पञ्चाहावानि शस्त्राणि छन्दोमेषु । २९।८.

आहावः । पञ्चाहावा रात्रिः वाजपेयस्य चातिरिक्तोक्थम् । ३०।११.

आहावः व्याहावः । अतिरात्रे पर्यायेषु गायत्रीः शस्त्वा जगतीः शंसन्ति व्याह्वयन्ते । १७।९.

आहावः । शोंसावो३ इति प्रातःसवने आह्वयन्ते, शुद्धं प्रणवं कुर्वन्ति मकाररहितम् । अध्वर्यो शोंसावो३ इति माध्यंदिने, अध्वर्यो शोशोंसावो३ इति तृतीयसवने । १४।३.

आहावः षोळशाहावं वैश्वदेवं शंसति अग्निष्टोमे । १६।४.

इडा दर्शपूर्ण० । प्रदेशिन्यां इडायाः पूर्वमञ्जनं अधरौष्ठे निलिम्पति, उत्तरमुत्तरौष्ठे । इळामुपह्वयते । तस्यां चतुरवानिति । इळामुपहूयावघ्राति । अध्वर्युर्बर्हिषदं पुरोळाशं करोति । जपेनोत्तरेळां प्राश्नाति । पवित्रवति मार्जयन्ते । ३।७. इळायां तिस्र आशिषो वदति । ३।८. पत्नीसंयाजोत्तरं इळामुपह्वयते । मार्जयते । ३।९.

इडा । प्रस्थितयाज्याः अथेळा अथ होतृचमसः । माध्यंदिने । १५।१. तृतीयसवने । १६।१.

इळादधः फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । स एव पशुकामस्य अन्नाद्यकामस्य यज्ञः । दाक्षायणयज्ञवत् । ४।५.

इडान्ता आतिथ्या । ८।२.

इडाप्राशनं नास्ति, किन्तु अवघ्राणमात्रं पितृयज्ञे । ५।७.

इडायां सूक्तवाके च 'आगुर उद्दचम्' इत्याह दीक्षणीयायां अग्निष्टोमे । ७।२.

इडोपाह्वानं द्विदेवत्यभक्षोत्तरम्, इळामुपह्वयते दक्षिणेन ( हस्तेन ) उत्तरेळां धारयन्, सव्येन होतृचमसं च पात्रीं च संयच्छति असंस्पर्शयन् । तस्यां न सुन्वदाह, अनाशिषो निराह । उपहूयेळां अवघ्राय अवस्यति । प्राश्नाति उत्तरेळाम्, अप आचम्य होतृचमसं भक्षयति । सर्वे समुपहूय भक्षयन्ति । १३।७.

इदं सर्वं यदयमात्मा । कौआ. १३.

इन्द्रगाथाः शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

इन्द्रतनूः नाम सूक्तम् 'यो जात एव प्रथमो मनस्वान्' इति ( इदमेव सजनीयं नाम अन्यत्र ) । २२।४.

इन्द्रियादीनां देवताः । उपासनमेवैतत् प्रकारान्तरेण । कौआ. ११।१,२.

इष्टिपशुबन्धाः सप्तदशसामिधेनीकाः । १।१.

उक्थं ब्रह्म इत्युपासनम् । कौआ. ४।६.

उक्थयाज्या ऐकाहिकाः । अनुवषट् कुर्वन्ति । ३०।१०.

उक्थयाज्या ऐकाहिकाः । छन्दोमेषु । २९।८.

उक्थवीर्यं जपति निष्केवल्ये महाव्रते । ऐकाहिकं पूर्वं, माहाव्रतिकं उत्तरम् । कौआ. २।१६.

उक्थानि ( शस्त्राणि ) सदसि शस्यन्ते । हविर्धानयोः प्रातरनुवाकमन्वाह । ११।८.

उक्थ्यः क्रतुः । ऐन्द्राग्नानि उक्थ्योक्थानि भवन्ति । आग्नेयीषु मैत्रावरुणाय प्रणयति । ऐन्द्रीषु इतरयोः ( ब्राह्मणाच्छंस्यच्छावाकयोः ) । चत्वारिचत्वारि सूक्तानि शंसन्ति, द्वादश संपद्यन्ते । चतुराहावानि शस्त्राणि । द्विदेवत्या उक्थ्ययाज्याः । ऐन्द्रावरुणी मैत्रावरुणस्य त्रिष्टुप् । ऐन्द्राबार्हस्पत्या ब्राह्मणाच्छंसिनः त्रिष्टुप् । ऐन्द्रावैष्णवी अच्छावाकस्य त्रिष्टुप् । अनुवषट् कुर्वन्ति । ऐन्द्रावरुणं मैत्रावरुणोक्थम् । ऐन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थम् । ऐन्द्रावैष्णवं अच्छावाकस्योक्थम् । १६।११.

उक्थ्यग्रहस्य आश्विनस्य पुरोऽनुवाक्यां तिरोअह्न्यवतीं त्रिष्टुभमन्वाह, तिरोअह्न्यवान् प्रैषः । ३०।११.

उक्थ्यस्य पञ्चदशस्तोत्राणि भवन्ति, पञ्चदश शस्त्राणि । तानि त्रिंशत् स्तुतशस्त्राणि । २४।९.

उच्चैः आग्निप्रणयने, प्रथमत एवोच्चैरनुब्रूयात् । इतः प्राक् तु उपांशु । ९।१.

उच्चैः पुनराधेयिकीष्टौ तृतीयानुयाजादि सर्वम् । पूर्वं तु उपांशु । १।५.

उच्चैः सौम्यस्य यजति । वैश्वदेवशस्त्रोत्तरं घृतयागः ततः सौम्ययागः । १६।५.

उच्छ्रितवती ऋक् 'उच्छ्रयस्व वनस्पते' । १०।२.

**उच्छ्रीयमाणाय** यूपायान्वाह– 'उच्छ्रयस्व वनस्पते, समिद्धस्य श्रयमाणः, जातो जायसे, ऊर्ध्व ऊ षु ण, ऊर्ध्वो नः पाह्यंहसो' । इति १०।२.

**उदयनीयं** प्रायणीयोदयनीये इत्यत्र द्रष्टव्यम् । ७।७.

**उदवसानीया** अतिरात्रे । उदङ् उदवसाय वैष्णव्यर्चा पूर्वाहुतिं जुहोति । पञ्चकपालः पुरोडाशो भवति । यद्यु वा अष्टाकपालः, पौर्णमासमेव तन्त्रं भवति । पदपङ्क्त्यो याज्यापुरोऽनुवाक्याः । तथैव ( १।५ ) व्यतिषक्ताः । तस्यां संस्थितायां यजमानः अग्निहोत्रं जुहोति । १८।१४.

**उदवसानीयायां** संस्थितायां मैत्रावरुणी पयस्या ( सत्रे प्रायणीयातिरात्रे ) । १९।७.

**उद्गाता** उद्गाति । १७।७.

**उद्गातृभ्यः** तं ( पुरोडाशं ) प्रयच्छति ( सौम्यपुरोडाशसर्पिषि आत्मानं पर्यवेक्ष्य अङ्गुलिभ्यां सर्पिरुपस्पृशति 'चक्षुष्पा असि चक्षुर्मे पाहि' इति चक्षुषी विमृजीत, ततस्तं प्रयच्छति । ) घृतयागसोमयागौ । १६।५.

**उद्यतवती** ऋक् 'उदुष्य देवः सविता' । प्रवर्ग्ये ।८।७.

**उद्वती** ऋक् 'ऊर्ध्व ऊ षु ण० ऊर्ध्वो नः०' । १०।२. ( 'ध्वान्तात् प्रपित्वादुदरन्त गर्भा०' 'उत्तूर्वयाणं धृषता निनेथ' इत्युद्वती । शाङ्खा. सू. १४।५९।३ । परन्तु तत् विषयान्तरम् । )

**उन्नीयमानेभ्यः** अन्वाह ऐन्द्रार्भवीः । अग्निष्टोमे । १६।१.

उन्नीयमानेभ्यः प्रातःसवने मैधातिथीरन्वाह ऐन्द्रीः गायत्रीः नव । नव वा अत्र चमसानुन्नयन्ति । २८।२. षळु हैके प्रातःसवने उन्नीयमानेभ्योऽन्वाहुः । स्वयमच्छावाकः सप्तमीम् । सप्तसप्त उत्तरयोः सवनयोः । सप्त वै प्राञ्च आसीना वषट् कुर्वन्ति इति वन्दतः । तदु वा आहुः यथासूक्तमेवानुब्रूयादिति । २८।३.

उन्नीयमानेभ्यः मध्यंदिने वासिष्ठीः ऐन्द्रीः त्रिष्टुभः दश अन्वाह । मध्यंदिने दश चमसानुन्नयन्ति । २९।२.

उन्नीयमानेभ्यः वामदेव्यः ( ऋचः ) तृतीयसवने अन्वाह । ताः ऐन्द्रार्भव्यः त्रिष्टुभो भवन्ति । नव । अथ होत्राः संयजन्ति । अत्र दश चमसानुन्नयन्ति । जगत्यो याज्याः । अनुवषट् कुर्वन्ति । अथेडा अथ होतृचमसः । ३०।१.

**उपगातृत्वम्** । औपगात्रं ह्यस्य ( होतुः ) भवति । १२।५.

**उपगानम्** । यजमानः स्तोत्रमुपगाति । १७।७.

**उपतिष्ठते** अग्नीन् प्रवत्स्यंश्च प्रोषितवांश्च । २।५.

उपतिष्ठते आहवनीयं होता । वेदातिशेषोपस्थानानन्तरम् । दर्शपूर्ण० । ३।९.

उपतिष्ठते । वेदातिशेषमुपतिष्ठते होता दर्शपूर्ण० । ३।९.

उपतिष्ठते । हुत्वा अग्नीनुपतिष्ठते अग्निहोत्रे । २।४.

**उपवसथः** । पूर्वां पौर्णमासीमुपवसेत् इति पैङ्ग्यम् । उत्तराम् इति कौषीतकम् । यां परि अस्तं अयम् ( आदित्यः ) उत्सर्पेत् इति सा स्थितिः । अनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसम् उपवसति । ३।१.

**उपवसथे** यूपमुच्छ्रयन्ति । १०।१.

**उपवेषेण** दक्षिणतोऽङ्गारानुपस्पृशति 'नमो देवेभ्यः' इति । अग्निहोत्रे । २।१.

**उपसदः** अग्निष्टोमे । सामिधेन्यः 'उपसद्याय मीह्ळुषे' इत्येतं तृचं पूर्वाह्णे अनुब्रूयात् । 'इमां मे अग्ने समिधम्' इत्यपराह्णे । द्वितीयेऽहनि 'इमां मे अग्ने' इत्येतं तृचं पूर्वाह्णे, 'उपसद्याय मीह्ळुषे' इत्यपराह्णे इति अहरहर्विपर्यासमनुब्रूयात् । अनवानमनुब्रूयात् । त्रिस्त्रिरेकैकामनुब्रूयात् । ता नव संपद्यन्ते । नैतं निगदमनुब्रूयात्, य एष सामिधेनीषु । अग्निमावह, सोममावह, विष्णुमावह इत्यावाहयेत् । तिस्रो देवता यजति । ८।८. गायत्र्यौ आग्नेय्यौ, त्रिष्टुभौ सौम्यौ, जगत्यौ वैष्णव्यौ । ता वै विपर्यस्यति, याः पूर्वाह्णे पुरोनुवाक्यास्ता अपराह्णे याज्याः करोति, या याज्यास्ताः पुरोऽनुवाक्याः । आज्यहविषो देवताः । पयोव्रतो यजमानः, परोवरीयसीरभ्युपेयात्, त्रीनग्रे स्तनान्, अथ द्वौ, अथैकम् । सम्राजोऽस्मै भक्षे दध्यानयेयुः, न व्रते । ८।९.

**उपस्थानं** आदित्यस्य प्राञ्चमुपनिष्क्रम्य, पितृयज्ञे । ५।७.

उपस्थानं गार्हपत्याहवनीययोः उदङ्ङः परेत्य । पितृयज्ञे । ५।७.

उपस्थानं महाव्रते अत्रैव तिष्ठन् अग्निं यथाङ्गं उपतिष्ठते नमो नम इति । आकाशं शालायै कुर्युः इति हैक आहुः । 'सं महान् महत्यादधात्, सं देवो देव्यादधात्, सं ब्रह्म ब्रह्मण्यादधात्' (इति मन्त्राः) । कौआ. १।५.

**उपांशु** अग्निष्टोमे अग्निप्रणयनात् प्राक् । तत्र उपांशु चरेयुः यथैव मिथः संशृण्वीरन् । अग्नौ प्रणीयमाने प्रथमत एवोच्चैरनुब्रूयात् । ९।१.

उपांशु । असंनयन् पुरोळाशावन्तरेण उपांशु यजति । ३।६.

उपांशु घृतस्य यजति । वैश्वदेवशस्त्रोत्तरं घृतयागः अग्निष्टोमे । १६।५.

उपांशु । चत्वार एव पशव उपांशु भवन्ति सौर्यः सावित्रः प्राजापत्यः वाग्देवत्यः इति, अथान्ये निरुक्ताः (उच्चैरित्यर्थः) । २५।१०.

उपांशु तूर्ष्णीशंसं शंसति हिंकारोत्तरम् । निष्केवल्यादौ महाव्रते । कौआ. २।१.

उपांशु पवमानेष्टयः । १।१. सा (पुनराधेयिकी इष्टिः) उपांशु भवति आ पूर्वाभ्यामनुयाजाभ्याम् । तृतीयानुयाजादि तु उच्चैः । केचित्तु विभक्तीः उत्तरमाज्यभागं हविः इति त्रयमेव आगन्तुकत्वादुपांशु इत्याहुः । १।५.

उपांशु । पौर्णमास्यां अग्नीषोमौ उपांशु निरुक्तौ भवतः । ३।६.

उपांशु भवन्ति पत्नीसंयाजाः । दर्शपूर्ण० । ३।९.

उपांशु । विषुवति अहनि सौर्यः पशुरुपालम्भ्यः सवनीयः । स उपांशु भवति । २५।१०

उपांशु । संनयन् सांनाय्यस्यान्तरेण उपांशु आज्यस्य यजति । ३।६.

**उपांशुहविषः** एता इष्टयो भवन्ति दीक्षणीया, प्रायणीया, आतिथ्या, उपसदः । ८।२.

**उपांश्वन्तर्यामौ** ग्रहौ । उपांशुं हूयमानमनुप्राण्यात्– 'प्राणं मे पाहि प्राणं मे जिन्व स्वाहा त्वा सुभव सूर्याय' इति । अन्तर्यामं हूयमानं अनु अवान्यात् 'अपानं मे पाहि अपानं मे जिन्व स्वाहा त्वा सुभव सूर्याय' इति । तयोर्वा उदितेऽन्यमनुदितेऽन्यं जुहुति । १२।४.

उपांश्वन्तर्यामौ विषुवति अहनि सूर्योदयोत्तरमेवेत्याहुः । तदुह स्माह कौषीतकिः यथायथमुपांश्वन्तर्यामौ हूयेते । २५।१०.

**उपाकरणं** प्रातरनुवाकस्य । महारात्रमुपाकुर्यात् यत्रैतत् पशवो मनुष्या वयांसि वाचं व्यालभन्ते, पुरा ततः । ११।८.

**उपासकस्य** ब्रह्मलोकं गतस्य ऐश्वर्यम् । कौआ. ३।४–७.

**ऋक्** । न ह वा ऋक् शस्त्रेण यातयामा भवति, नानुवचनेन । वषट्कारेणैव सा यातयामा भवति समानेऽहन् । २२।१.

**ऋतुप्रैषाः** । कण्वो हैतान् ऋतुप्रैषान् ददर्श, मेधातिथिर्याज्याः । काण्वो ह वै मेधातिथिः । २८।८.

**ऋतुयाजैश्चरन्ति** । षट् 'ऋतुना' इति यजन्ति । चत्वारः 'ऋतुभिः' इति । द्विः 'ऋतुना' इत्युपरिष्टात् । अनवानं यजन्ति । नानुवषट्कुर्वन्ति । लिम्पेदिवैव, अवेव जिघ्रेत् अत्र च द्विदेवत्येषु च । ते वै द्वादश भवन्ति । नान्योन्यमनुप्रपद्येते अध्वर्यू । १३।९.

**ऋत्विजः** प्रायणीयोदयनीययोः अभिन्ना एव । ७।५.

**एकगर्त्यः** यूपः त्याज्यः । एको यः अवाचीनवकलः स गर्त्यः । तस्याशां नेयात् । १०।२. (अत्र अवाचीनवकलः, ऊर्ध्ववकलः, आदित्यस्य अन्वावृत्तवकलः इति त्रयः प्रकाराः उक्ताः । तत्र वकलम् अल्पा शाखा) ।

**एकद्रव्यः** यूपः (सर्वथा शाखारहितः) त्याज्यः । एकस्थोऽभ्रातृव्यः । (एकाकी, यस्य समन्तात् द्वितीयः पलाशो नास्ति) । ९।२.

**एकधनावरोधनं** नाम होमः धनलाभार्थः । पौर्णमास्याम्, अमावास्यायां वा, शुद्धपक्षे वा पुण्ये नक्षत्रे, अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जानु आच्य स्रुवेणाज्याहुतीर्जुहोति 'वाङ् नाम० प्राणो नाम० चक्षुर्नाम० श्रोत्रं नाम० प्रज्ञा नाम देवता अवरोधिनी, सा मे अमुष्मात् इदमवरुन्ध्यात् तस्यै

स्वाहा ' इति । अथ धूमगन्धं प्रजिघ्राय ( प्रघ्राय ) आज्यलेपेन अङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्य अर्थं ब्रूयात् दूतं वा प्रहिणुयात् लभेत हैव । कौआ. ४।३.

**एकादशिनी** । पश्वेकादशिनी अग्निष्टोमे सवनीयपशुस्थाने । एकादशिनीं त्वेव अन्वायातयेयुः इति सा स्थितिः यदि पृष्ठोपायं भवति । १२।७. तस्यै एकादशिन्यै याज्यापुरोऽनुवाक्या एव नाना मनोतायै च हविषः । इतरत् समानम् । आग्नेयः प्रथमः, सारस्वतः द्वितीयः, सौम्यस्तृतीयः, पौष्णश्चतुर्थः, बार्हस्पत्यः पञ्चमः, वैश्वदेवः षष्ठः, ऐन्द्रः सप्तमः, मारुतः अष्टमः, ऐन्द्राग्नः नवमः, सावित्रः दशमः, वारुण एकादशः । १२।८.

**एकादशिन्यां** पश्वेकादशिन्यां एकयूपे । यद्येकयूपे एकादशिनीमालभेरन् पशौपशौ एव ' युवा सुवासा ' इति सैव परिधानीया, सा परिवीयमाणाय । १०।२.

**एतमु हैव** ( आत्मानं ) बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः । कौआ. ८।४.

**एवयामरुतं** अच्छावाकः शंसति षष्ठेऽहन् । ३०।८.

**ऐतशप्रलापं** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**ऐतशायनाः** आजानेयाः ( कुलीनाः ) सन्तः भृगूणां पापिष्ठाः, पित्रा हि शप्ताः । ३०।५.

**ऐन्द्रवायवस्य** द्विर्भक्षयति, द्विर्हि तस्य वषट् करोति । १३।६.

**औद्ग्रभणानि** यदा अध्वर्युर्जुहोति, तदा यजमानः 'मनो मे मनसा दीक्षताम्' इत्यादि पञ्चप्रतीकैः अनुमन्त्रयते । इयं केशिनी दीक्षा । ७।४.

**औपगात्रं** ( उपगातृत्वं ) हि तस्य होतुर्भवति । १२।५.

**औपासनं** ( एकदेशं ) तृतीयसवने उपास्यन्ति । अग्निष्टोमे । १६।१.

**औपासनात्** तृतीयसवने उपास्यन्ति ( आहवनीये ) अथ सावित्रग्रहेण चरन्ति । ३०।१.

**कारव्याः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**कालः** इळादधस्य फाल्गुनी पौर्णमासी । ४।५.

**कालः** ( अक्षराणां ) गतिनिवृत्तिस्थिती: संदधाति । गतिनिवृत्तिस्थितिभिः इदं सर्वं संधीयते । कौआ. ७।२१.

**कालः** । चातुर्मास्यानि फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । ऋतुसंधिषु प्रयुज्यन्ते । ५।१.

**कालः** तुरायणस्य फाल्गुनी पौर्णमासी । ४।११.

**कालः** दाक्षायणयज्ञस्य फाल्गुनी पौर्णमासी । ४।४.

**कालः** पुनराधेयस्य । वर्षासु हैके, माघ्या वर्षे पुनर्वसूनक्षत्रमुदीक्ष्य पुनरादधीत । या वैषा आषाढ्या उपरिष्टात् अमावास्या भवति, तस्यां पुनरादधीत । १।३.

**कालः** मुन्ययनस्य फाल्गुनी पौर्णमासी । ४।१०.

**कालः** यवाग्रयणस्य । यवसस्ये आगते अमावास्या वा पौर्णमासी वा पूर्वपक्षे नक्षत्रं वा । श्यामाकाग्रयणवत् । ४।१४.

**कालः** यूपोच्छ्रयणस्य उपवसथः । १०।१.

**कालः** वसिष्ठयज्ञस्य फाल्गुनी अमावास्या । ४।८.

**कालः** वेणुयवाग्रयणस्य । वसन्ते पक्केषु वेणुयवेषु अमावास्या वा पौर्णमासी वा पूर्वपक्षे नक्षत्रं वा । श्यामाकाग्रयणवत् । ४।१३.

**कालः** वैश्वदेवपर्वणः । वैश्वदेवेन फाल्गुन्यां पौर्णमास्यां यजते । ५।१.

**कालः** व्रीह्याग्रयणस्य । व्रीहिसस्ये आगते अमावास्या वा पौर्णमासी वा पूर्वपक्षे नक्षत्रं वा । श्यामाकाग्रयणवत् । ४।१४.

**कालः** शौनकयज्ञस्य फाल्गुनी पौर्णमासी । ४।७.

**कालः** श्यामाकाग्रयणस्य । श्यामाकपाकोत्तरं अमावास्या वा पौर्णमासी वा नक्षत्रं पूर्वपक्षगतं वा किञ्चित् । ४।१२.

**कालः** सत्रारम्भस्य । ' दीक्षाकालः सत्रस्य ' इत्यत्र द्रष्टव्यम् । १९।२.

**कालः** साकंप्रस्थाय्यस्य फाल्गुनी अमावास्या । ४।९.

**कालः** सार्वसेनियज्ञस्य फाल्गुनी पौर्णमासी । ४।६.

**कालेयं** अच्छावाकस्य पृष्ठम् । २९।७. तद्वा ऐडं बृहतीषु कुर्वन्ति । २९।३.

**कुन्तापं** यथाछन्दसं शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**कूर्चे** निलिम्पति । स्रुचमुत्तरतः सायमुपमार्ष्टि, तत् कूर्चे निलिम्पति । दक्षिणेन कूर्चे उत्तानं पाणिं निदधाति अग्निहोत्रे । २।२.

**कृष्णाजिनं** प्रतिमुञ्चते तुरायणे नाम यज्ञे । ४।११.

**केशिनी दीक्षा** अग्निष्टोमे । यत्र अध्वर्युः औद्ग्रभणानि जुहोति, तदुप यजमानः पञ्चाहुतीर्जुहुयात् तदु ह स्माह कौषीतकिः न होतव्या अतिरिक्ता आहुतयः । अध्वर्युमेव जुह्वतं अन्वारभ्य प्रतीकैरनुमन्त्रयेत 'मनो मे मनसा दीक्षतां इति प्रथमाम्, वाङ् मे मनसा दीक्षतां इति द्वितीयाम्, प्राणो मे प्राणेन दीक्षतां इति तृतीयाम्, चक्षुर्मे चक्षुषा दीक्षताम् इति चतुर्थीम्, श्रोत्रं मे श्रोत्रेण दीक्षताम् इति पञ्चमीम् । अपराह्णे दीक्षते । ७।४.

**क्रमः** । संहितापदक्रमज्ञानमाहात्म्यम् । कौआ. ७।११.

**क्रोशं** नाम साम महाव्रते । कौआ. १।४.

**खादिरं** ( यूपं कुर्वीत ) स्वर्गकामः । १०।१.

**खिलम्** । यद्वै उर्वरयोरसंभिन्नं भवति, खिलमिति वै तदाचक्षते । ( उर्वरा सस्याढ्यं क्षेत्रम् ) । ३०।८.

**गर्त्यः** यूपः त्याज्यः । अवाचीनवकलः ( वकलः = अल्पा शाखा ) । १०।२.

**गर्भकामायै** गर्भं ध्यायात् अग्नीषोमप्रणयने प्रणयनीयानुवचने 'भूतानां गर्भमादधे' इति मन्त्रांशपठनकाले, लभते ह गर्भम् । ९।५.

**गर्भकालः** । स जायमानो द्वादशत्रयोदशो मासः । कौआ. ३।२.

**गर्भिण्यां** (मेष्यादौ) संज्ञप्तायां ( परंतु गर्भिणी यदा न विहिता तदा ) । यदि अष्टापदी स्यात् गर्भस्य त्वचो वपारूपं शामित्रे श्रपयित्वा इतरस्य वषट्कारेषु शामित्रे एव जुहुयुः । १८।१२.

**गायत्रतृतीयसवनो** हि एषः छन्दोमत्र्यहः । २६।१०,१३,१७.

**गायत्रप्रातःसवनो** ह्येष त्र्यहः प्रथमः । २२।१-३.

**गायत्रमाध्यंदिनो** ह्येष त्र्यहः द्वितीयः । २२।७; २३।१,२,६,७.

**गायत्री-अशीतिः** 'महाँ इन्द्रो य ओजसा' इ० । कौआ. २।८.

**गायत्री** प्रातःसवनं वहति । १२।३.

**गार्हपत्यमुत्तरेण** उपसादयति अग्निहोत्रमुन्नीय । २।२.

**गार्हपत्ये** अधिश्रित्य, आहवनीये जुहुयात् अग्निहोत्रम् । २।१.

**गार्हपत्योपस्थानं** उदञ्चः परेत्य पितृयज्ञे । ५।७.

**गोआयुषोर्मीमांसा** । विकृते गोआयुषी उपेयुः । ते हैके ऊर्ध्वे उपयन्ति, आभिप्लविकाः स्तोमाः आवर्तन्ते दशरात्रमनु पृष्ठ्यस्तोमाः इति वदन्तः । तदाहुः यदेवेदं द्वितीयमहः यच्च तृतीयम्, एते वा गोआयुषी । २६।२.

**गोपशुः** भवति अनूबन्ध्या अतिरात्रे । १८।१३.

**गौः** चतुर्थमहः अभिप्लवषडहे । आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम् । २१।१-२.

**गौः** द्वितीयमहः अभिप्लवषडहे । आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम् । २०।३.

**ग्रहं** महाव्रते निष्केवल्यशस्त्रसंबन्धिनं परामृशन् जपति ' यमिमं प्रजयं० ' । कौआ. २।१७.

**ग्रहाः** । उपांशुः अन्तर्यामः । १२।४. द्विदेवत्यग्रहाः ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः । १३।५.

**ग्रामकामस्य** धूमायन्त्यां समिधि अग्निहोत्रं जुहुयात् । २।२.

**ग्रावस्तोत्रीयम्** । अर्बुदेन च पावमानीभिश्च ग्राव्णः अभिष्टौति माध्यंदिनपवमानात् प्राक् । १५।१.

**ग्रावस्तोत्रीयाः** अर्बुदः काद्रवेय उवाच 'प्रैते वदन्तु प्र वयं वदाम, बृहद्वदन्ति मदिरेण मन्दिना, विश्रू मुञ्चा सुषुवुषो मनीषाम्' । चतुर्दश भवन्ति । जगत्यः । त्रिष्टुभा परिदधाति । तिष्ठन्नभिष्टौति । उष्णीषी अपिनद्धाक्षः अभितुष्टात्र । पावमानीर्विषापवदनीरभिष्टौति । २९।१.

**ग्रैवं शंसति** निष्केवल्यस्य महाव्रते । तिस्र ऋचो भवन्ति उष्णिगुत्तमा । कौआ. २।३.

**घृतयागः** वैश्वदेवशस्त्रोत्तरम्, ततः सौम्ययागः । 'घृतस्य यज' इत्याह । उपांशु घृतस्य यजति । तस्य ( सौम्ययागस्य ) न परस्तात् पर्यजेदित्याहुः । पर्यजेदित्येव स्थितम् । १६।५.

**चतुर्थेऽहनि** पृष्ठ्ये षडहे उक्थान्युपेत्य सुप्त्वा षोळशिनमुपयन्ति । २२।९.

चतुर्थेऽहनि पृष्ठ्ये षडहे न्यूङ्खयति । आज्यं न्यूढे समूढे पृथक् । प्रउगः न्यूढे समूढे समानः । मरुत्वतीयम्, निष्केवल्यम्, वैश्वदेवम्, आग्निमारुतम्, उभयत्र प्रायः समानानि । २२।६-९.

**चतुर्विंशमहः** सत्रस्य आरम्भणीयम् । अग्निष्टोमः । उक्थ्यमेके कुर्वन्ति । चतुर्विंशः स्तोमः । त्रीणि षष्टिशतानि स्तोत्रियाः । बृहत् पृष्ठम् । आज्यम् 'होताऽजनिष्ट चेतनः' अष्टर्चं गायत्रम् । प्रउगः माधुच्छन्दसः । मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम् । अग्निष्टोम इति पैङ्ग्यम् । उक्थ्यमिति कौषीतकम् । १९।८-९. एतदहः एके छन्दोगाः सर्वस्तोमं कुर्वन्ति । ते यदि तथा कुर्युः (तदा) षळहवत्स्तं शस्त्रं कल्पयीत । प्रथमस्याह्न आज्यं, द्वितीयस्य प्रउगः, तृतीयस्य मरुत्वतीयं, चतुर्थस्य निष्केवल्यं, पञ्चमस्य वैश्वदेवं, षष्ठस्याग्निमारुतम् । तत्र सर्वान् पृष्ठ्यस्तोत्रियान् समाहृत्य उपरिष्टात् प्रगाथस्य प्रगाथीकृत्य शंसेत् । (वस्तुतस्तु) सैषा मुग्धिरेव । यं कं च छन्दोगाः स्तोममुपापद्येरन् न तत् आद्रियेत, यदेवेदं शस्त्रं प्रागेक्ष्याम तत एव न इयात् । (उक्ताभ्यां कयाशुभीयतदिदासीयाभ्यां) ताभ्यामेव न निश्च्यवेत (इतरस्मात्तु निश्च्यवने न दोषः) । १९।१०.

**चतुर्विंशे** अभिजिति विषुवति विश्वजिति महाव्रते च स्तोमातिशंसं प्रातःसवनेषु शस्त्वा अहीनसूक्तानि माध्यंदिनेषु शंसन्ति । अहीनसूक्तानि शस्त्वा ऐकाहिकानि शंसन्ति । २९।८.

चतुर्विंशे मैत्रावरुणः षट्त्रिंशतं शंसति, चत्वारिंशतं ब्राह्मणाच्छंसी, चतुश्चत्वारिंशतं अच्छावाकः । ३०।१०.

**चन्द्रमसं** गच्छन्ति । चित्रः गाङ्ग्यायनिः श्वेतकेतुं तत्पितरं चोवाच– ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । एतद्वै स्वर्गस्य लोकस्य द्वारं यच्चन्द्रमाः । कौआ. ३।१-२.

**चन्द्रलोकात्** प्रत्यागमनं केषांचित्– तं यः प्रत्याह (विचक्षणादृतवो रेत आभृतम् इत्यादि) तमतिसृजते (चन्द्रलोकाधिपतिः) अथ यो न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति । स इह कीटो वा, पतङ्गो वा, मत्स्यो वा, शकुनिर्वा, सिंहो वा, वराहो वा, परश्वा वा, शार्दूलो वा, पुरुषो वा, अन्यो वा, तेषुतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम् । कौआ. ३।२.

**चन्द्रोपस्थानं** शुक्लप्रतिपदि द्वितीयायां वा (चन्द्रदर्शने सति) । कौआ. ४।८. पौर्णमास्यां (पुरस्तात्) । ४।९.

**चयनं** सत्रे । अथ चिन्वन्ति यावदहं कामयन्ते । अथैतं संचितं सामभिः परिष्टुवन्ति । अथ होतारमाहुः 'अग्न्युक्थमनु जप' इति । १९।४.

**चातुर्मास्यानि** । वैश्वदेवपर्व । ५।१-२. वरुणप्रघासाः । ५।३-४. साकमेधाः । ५।५-७. शुनासीर्यम् । ५।८-१०. चातुर्मास्यानि प्रयुञ्जानः फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । ऋतुसंधिषु प्रयुज्यन्ते । ५।१.

**चातुर्मास्येषु** आतिथ्यायां च अग्निमन्थनीयासु 'तं मर्जयन्त सुक्रतुम्' इति परिधानीया । पशौ तु 'यज्ञेन यज्ञमयजन्त देवाः' इति त्रिष्टुप् परिधानीया । ८।१-२.

**चात्वालोत्करौ** अन्तरेण तीर्थम् । तच्च आप्नानं नाम । १८।९.

**छन्दोमः (प्रथमः)** । आज्यम्, प्रउगः । २६।८, मरुत्वतीयम्, निष्केवल्यम् । २६।९. वैश्वदेवम्, आग्निमारुतम् । २६।१०. यत् किञ्च छन्दः प्रातःसवने युज्येत अर्धर्चश एव तस्य शस्त्रमिति केचित् । तदु ह स्माह कौषीतकिः न त्रिष्टुब्जगत्यौ एतत्स्थाने अर्धर्चशः शस्याय यद्यपि प्रातःसवने युज्येयाताम्, पच्छ एवैनयोः शस्त्रमिति सा स्थितिः । बृहत् पृष्ठं, राथंतरं शस्त्रम् । २६।८.

छन्दोमः (**द्वितीयः**) । आज्यं, प्रउगः । २६।११. मरुत्वतीयं, निष्केवल्यम् । २६।१२. वैश्वदेवं, आग्निमारुतम् । २६।१३.

छन्दोमः (**तृतीयः**) । आज्यम् । २६।१४. प्रउगः । २६।१५. मरुत्वतीयं, निष्केवल्यम् । २६।१६. वैश्वदेवं, आग्निमारुतम् । २६।१७.

**छन्दोमाः** त्रयः । चतुर्विंशस्तोमः प्रथमः, चतुश्चत्वारिंशस्तोमः द्वितीयः, अष्टाचत्वारिंशस्तोमः तृतीयः । तेषां

गायत्र्या प्रथमो मितः, त्रिष्टुभा द्वितीयः, जगत्या तृतीयः। तद्यत् छन्दोभिर्विमिताः तस्माच्छन्दोमाः। अथ याः षट् स्तोत्रियाः अष्टाचत्वारिंशं स्तोममतियन्ति तामिदंशममहस्त्रायते। २६।७. तानि वा एतानि महास्तोमानि अहानि भवन्ति तस्मादन्वहं बृहत् क्रियते। २६।९. अन्वहं द्विपदाः शस्यन्ते सर्वेषु छन्दोमेषु। २६।१७.

**छन्दोमेषु** अच्छावाकः प्रथमे छन्दोमे पञ्च सूक्तानि शंसति, षट्षट् उत्तरयोः। ३०।१०.

छन्दोमेषु ब्राह्मणाच्छंसी प्रथमे छन्दोमे चत्वारि सूक्तानि शंसति, पञ्चपञ्च उत्तरयोः। ३०।१०.

छन्दोमेषु सर्वेषु मैत्रावरुणः पञ्चपञ्च सूक्तानि शंसति। ३०।१०. पञ्चाहावानि शस्त्राणि। ऐकाहिका उक्थयाज्याः। अनुवषट् कुर्वन्ति। २९।८.

**जगत्प्रातःसवनो** ह्येष त्र्यहः द्वितीयः। २२।७, २३।१.

**जनकल्पाः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन्। ३०।७.

**जपं** जपेत् पवमाने स्तुते– 'उपहूता देवा अस्य सोमस्य...त्वा भक्षयामि' इति। १२।५.

**जपः**। तूष्णीं जपः आज्यात् शस्त्रात् पुरस्तात्। १४।१.

**जायासंवेशने**। संवेश्य जायायै हृदयमभिमृशेत् 'यत्ते सुशीमे०' इति। कौआ. ४।१०.

**जीवनवन्तौ** आज्यभागौ पितृयज्ञे 'आ नो अग्ने सु चेतुना' 'त्वं सोम महे भगं' इति। ५।७.

**ज्ञानसाधनानि** वेदानुवचनं ब्रह्मचर्यं तपः श्रद्धा यज्ञः अनाशकं चेति। शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तः। कौआ. १३.

**ज्योतिः** प्रथममहरुपयन्ति अभिप्लवषडहे सत्रे। आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २०।२.

ज्योतिः षष्ठमहः अभिप्लवषडहे। आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २१।४.

**तत्त्वमसि**। कौआ. १३.

**तपस्वती**। तिस्रः ऋचः 'भवा नो अग्ने, तपोष्वग्ने, यो नः सनुत्यो।' प्रवर्ग्ये। ८।४.

**तार्क्ष्ये** दूरोहणं रोहति षष्ठेऽहन् मैत्रावरुणः। ३०।५,९.

**तीर्थं** अन्तरेण चात्वालोत्करौ उपनिष्क्रामन्ति। तद्धि यज्ञस्य तीर्थमाप्नानं नाम। १८।९.

**तुरायणं** फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते, स एष स्वर्गकामस्य यज्ञः। कृष्णाजिनं प्रतिमुञ्चते। त्रीणि हवींषि भवन्ति। ४।११.

**तुस्तूर्षमाणस्य**। य इच्छेद् द्विषन्तं भ्रातृव्यं स्तृण्वीयेति सोऽनेन यजेत शौनकयज्ञेन। ४।७.

**तूष्णींशंसं** उपांशु शंसति आज्यशस्त्रस्य आदौ जपोत्तरम्। 'अग्निर्ज्योतिर्ज्योतिरग्निः, इन्द्रो ज्योतिर्ज्योतिरिन्द्रः, सूर्यो ज्योतिर्ज्योतिः सूर्यः' इति, अथ निवित्। १४।१.

तूष्णींशंसं उपांशु शंसति निष्केवल्यारम्भे महाव्रते। कौआ. २।१.

**तृतीयसवनं** आदित्यग्रहेण प्रतिपद्यते। १६।१, ३०।१.

तृतीयसवनं आदित्यानाम्। १६।१,३०।१.

तृयतीयसवनं जागतम्। १६।१.

**तृतीयसवने** 'अध्वर्यो शोशोंसावो' इत्याहावः (मकारो नास्ति)। १४।३.

तृतीयसवने उन्नीयमानेभ्यः वामदेव्यः ऋचः ऐन्द्राभ्यः त्रिष्टुभः नव अन्वाह। अथ होत्राः संयजन्ति। अत्र दश चमसानुन्नयन्ति। ३०।१.

तृतीयसवने एनेन (पशुना– अङ्गैः) प्रचरन्ति। १२।६.

तृतीयसवने औपासनं (कंचिदंशम्) (आहवनीये) उपास्यन्ति। १६।१.

तृतीयसवने औपासनात् उपास्यन्ति। अथ सावित्रग्रहेण चरन्ति। उक्थे अन्तरेण अग्नीत् पात्नीवतस्य यजति। ३०।१.

तृतीयसवने प्रतिगरः 'शोशोंसामो दैव' इति। १४।३.

तृतीयसवने मैत्रावरुणश्चाच्छावाकश्च द्विदेवत्याः शंसतः। ब्राह्मणाच्छंसी द्विदेवत्याः शंसति। २८।९.

तृतीयसवने शस्त्रजपः 'अवाचीन्द्रायोक्थं देवेभ्यः' इति। 'उक्थशाः' इत्यध्वर्युः। १४।३.

तृतीयसवने सवितारं यजति (प्रातःसवने माध्यंदिने च)। १६।२.

तृतीयसवने सूक्तस्य उत्तमाः (ऋचः) परिशिष्य निविद् धीयते। १४।१.

**तृतीयेऽहनि** पृष्ठ्ये षडहे– आज्यम्, प्रउगः। २२।३. मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २२।४–५.

**त्र्यम्बकाः** साकमेधेषु श्वोभूते पितृयज्ञोत्तरम्। उदञ्चः परेत्य त्र्यम्बकैश्चरन्ति। ५।७.

**त्र्यहः** प्रथमः गायत्रप्रातःसवनः, त्रिष्टुभ्मध्यंदिनः, जगत्तृतीयसवनः व्यूढे। त्र्यहः द्वितीयः जगत्प्रातःसवनः, गायत्रमध्यंदिनः; त्रिष्टुप्तृतीयसवनः व्यूढे। त्र्यहः तृतीयः त्रिष्टुप्प्रातःसवनः, जगन्मध्यंदिनः, गायत्रतृतीयसवनः व्यूढे। २७।७.

**त्र्यहे मध्यमे (द्वितीये)** शिल्पानि शस्यन्ते। २९।५.

**दक्षिणा** अग्न्याधेयस्य द्वादश (गावः) अश्वं त्रयोदशं ददाति। १।१.

दक्षिणा अभ्युदितेष्टौ तिसृधन्वम् (बाणत्रयसहितं धनुः)। ४।२.

दक्षिणा अभ्युद्दृष्टेष्टौ दण्डोपानहम्। ४।३.

दक्षिणा अश्वः श्वेतः षष्ठेऽहनि आदित्याङ्गिरसीशसने। ३०।६.

**दक्षिणाजपः**। अहरहर्जपेयुः 'इदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणां नयामि' इति (अहीनादौ)। १५।१.

**दक्षिणा** दर्शपूर्णमासयोः। अन्वाहार्यमाहरन्ति। एतद्दक्षिणौ वै दर्शपूर्णमासौ। ३।७.

दक्षिणा नीयन्ते दाक्षिणेषु होमेषु हुतेषु माध्यंदिने, अग्निष्टोमे। १५।१, २९।२.

दक्षिणा पुनराधेयस्य। तस्यै पुनरुत्स्यूतो जरत्संन्यायः, पुनःसंस्कृतः कद्रथः, अनड्वान् हिरण्यं वा दक्षिणा। १।५.

दक्षिणा वरुणप्रघासेषु मिथुनौ गावौ। ५।४.

दक्षिणा वैश्वदेवपर्वणि प्रथमजो गौः। ५।२. व्रीह्याग्रयणे यवाग्रयणे च। ४।१४.

दक्षिणा शुनासीर्ये श्वेता गौः। ५।८.

दक्षिणा श्यामाकाग्रयणे वेणुयवाग्रयणे च मधुपर्कः। ४।१२–१३.

दक्षिणा साकमेधेषु ऋषभः। ५।५.

**दक्षिणासंस्थो** वै पितृयज्ञः। ५।७. (दक्षिणायां दिशि समाप्तिर्यस्य)।

**दक्षिणा (दिक्)** सोमं क्रीतं दक्षिणा परिवहन्ति, दक्षिणा तिष्ठन्नभिष्टौति, दक्षिणा तिष्ठन् परिदधाति, (सोमप्रणयने अपरया द्वारा हविर्धाने सोमस्य प्रपदने उत्तरतो दक्षिणा तिष्ठन् होता परिधानीयामाह इत्यर्थः।) दक्षिणा एवैनमासीना अभिष्टुण्वन्ति। ७।६.

**दधिघर्मः**। स्तुते पवमाने माध्यंदिने दधिघर्मेण चरन्ति। अथ हविष्पङ्क्त्या चरन्ति। २९।२.

दधि भक्षे आनयेयुः सम्राजोऽर्थे, न व्रते। ८।९.

**दर्शपूर्णमासौ**। उपवसथः। ३।१. सामिधेन्यः, निगदः पञ्चदशपदः। ३।२. देवता आवाहयति, स्रुचौ आदापयति। ३।३. प्रयाजान् यजति। ३।४. आज्यभागौ। ३।५. प्रधानम्। ३।६. इडा। अन्वाहार्यः दक्षिणा। अनूयाजसमित्। ३।७. अनूयाजाः, सूक्तवाकः, शंयुवाकः। ३।८. पत्नीसंयाजाः, ऋक्जपः, इळोपाह्वानं, मार्जनं, शंयुवाकः, वेदे पत्नीं वाचयति, पत्नी वेदतृणानि अन्तरोरू कुरुते, वेदं स्तृणाति, वेदातिशेषमुपतिष्ठते, अप उपस्पृशति। ३।९.

**दशममहः** अविवाक्यम्। २७।१.

दशममहः गायत्रप्रातःसवनम्। २७।७.

**दाक्षायणयज्ञः**। फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते। अपरपक्षं व्रतानि चरति, न अशने काममापयति, 'सोमं राजानं चन्द्रमसं भक्षयामि' इति मनसा ध्यायन्नश्नीयात्, उपवसथे अग्नीषोमीयमेकादशकपालं पुरोळाशं निर्वपति। प्रातरामावास्येन यजते। अमावास्यायामुपवसथे ऐन्द्राग्नं द्वादशकपालं पुरोळाशं निर्वपति, मैत्रावरुणी पयस्या। ४।४.

**दाक्षिणेषु** होमेषु हुतेषु दक्षिणा नीयन्ते माध्यंदिने, अग्निष्टोमे । १५।१.

**दाधिक्रीं** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् 'दधिक्राव्णो०' । ३०।८.

**दिशांक्लृप्तीः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।७.

**दिशामवेष्टीः** एके कुर्वन्ति षट् सत्रस्य प्रायणीयेऽतिरात्रे अनुबन्ध्यस्य पुरोडाशमनु निर्वाप्येषु । १९।७.

**दीक्षणीया** अग्निष्टोमे । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति, कामं पूर्वो दीक्षित्वा संसुनुयात् । ७।१. पञ्चदश सामिधेनीरन्वाह, वार्त्रघ्नावाज्यभागौ, त्रिष्टुभौ हविषो याज्यापुरोऽनुवाक्ये 'उप वां जिह्वा घृतमाचरण्यत्, प्रति वां जिह्वा घृतमुच्चरण्यत्' इति त्रिष्टुभौ संयाज्ये ; 'आगुर उद्टचं' इति इळायां च सूक्तवाके चाह, यदा वा आग्नावैष्णवः पुरोळाशो निरुप्यते अथैव दीक्षित इति ह स्माह, न सूक्तवाके यजमानस्य नाम गृह्णाति । ७।२. न वेदे पत्नीं वाचयति, नैनं (वेदं) स्तृणाति, दीक्षितस्यान्ये नाम न गृह्णन्ति, सोऽन्यस्य नाम न गृह्णाति, यमिच्छेत् विचक्षणवत्या वाचा तस्य नाम गृह्णीयात् । यः सत्यं वदति स दीक्षितः । दीक्षितस्य अशनं नाश्नन्ति, कामं प्रसूते अश्नीयात् । दीक्षितः अग्निहोत्रं न जुहोति । सायं प्रातर्व्रतं प्रदीयते । ७।३.

दीक्षणीया उपांशुहविः । ८।२.

दीक्षणीया पञ्चहविः । अग्निचित्यायां पञ्चहविषं दीक्षणीयामिष्टिमेके तन्वते । १९।४.

दीक्षणीया पत्नीसंयाजान्ता । ८।२.

**दीक्षा** अपराह्णे । ७।४.

**दीक्षाकालः** सत्रस्य– तैषस्य अमावास्यायाः एकाहे उपरिष्टात् दीक्षेरन् माघस्य वा इत्याहुः । तदुभयं व्युदितम् । तैषस्य त्वेव उदिततरमिव । १९।२. स वै माघस्यामावास्यायां उपवसति, उदङ् आवर्त्स्यन् उपेमे वसन्ति प्रायणीयेनातिरात्रेण यक्ष्यमाणाः । तच्चतुर्विंशेनारभन्ते । स षण्मासानुदङ् एति तमूर्ध्वैः षडहैरनुयन्ति (ततः–) दक्षिणा आवर्त्स्यन् उपेमे वसन्ति वैषुवतेनाह्ना यक्ष्यमाणाः । स षण्मासान् दक्षिणैति, तमावृत्तैः षडहैरनुयन्ति । (ततः–) उदङ् आवर्त्स्यन् उपेमे वसन्ति महाव्रतीयेनाह्ना यक्ष्यमाणाः । तद्वै न तस्मिन् काले दीक्षेरन् अनागतं सस्यं भवति, दहरकाणि अहानि भवन्ति, संवेपमाना अवभृथादुदायन्ति, तस्मादत्र न दीक्षेरन् । चैत्रस्यामावास्यायां एकाहे उपरिष्टात् दीक्षेरन्, आगतं सस्यं भवति, महान्ति अहानि भवन्ति, असंवेपमाना अवभृथादुदायन्ति तस्मादेतत् स्थितम् । १९।३.

**दीक्षितः** अग्निहोत्रं न जुहोति, यज्ञे वितते । ७।३.

दीक्षितः सत्यं वदेत् । ७।३.

**दीक्षितनियमाः** । नैनं बहिर्वेदि अभ्यस्तमियात् नाभ्युदियात्, नाभ्युपाकुर्यात् नाभ्याश्रावयेत् नाभिवषट्कुर्यात् नाधिष्ण्ये प्रतपेत् । १७।७.

**दीक्षितस्य** अन्ये नाम न गृह्णन्ति (केवलं नाम) । सोऽन्यस्य नाम न गृह्णाति । ग्रहणप्रसङ्गे तु विचक्षणवत्या वाचा नाम गृह्णीयात् 'विचक्षण अमुक' इति । दीक्षितस्तु दीक्षितशब्देनैव वक्तव्यः । ७।३.

दीक्षितस्य अशनं नाश्नन्ति । कामं प्रसूते अश्नीयात् । ७।३.

**दूरोहणं** रोहति । विषुवति अहनि । (हंसः शुचिषत् इत्येतामृचं सप्तवारान् शंसेत् पच्छः अर्धर्चशः त्रिपच्छः अनवानं त्रिपच्छः अर्धर्चशः पच्छः इति । अस्या दूरोहणसंज्ञा । शांखाश्रौ. ११।१४।१३–१४. दूरोहणं रोहति षष्ठेऽहनि यथा विषुवति । शाङ्खाश्रौ. १२।११।१२. दूरोहणं रोहति वाजपेये यथा विषुवति । शाङ्खाश्रौ. १५।३।१०) । २५।७.

**देवता** आवाहयति अग्निमग्न आवह इत्यादि सामिधेन्यन्ते दर्शपूर्ण० । ३।३.

**देवयानः** पन्थाः । ये वै के चास्मात् लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । तमागतं पृच्छति (चन्द्रमाः) कोऽसीति, तं यः प्रत्याह 'विचक्षणादृतवो०' इत्यादि तमतिसृजते उपरि गन्तुम् । कौआ. ३।२. सः (अतिसृष्टः) एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति, स वायुलोकं, स वरुणलोकं, स इन्द्रलोकं, स ब्रह्मलोकम् । कौआ. ३।३.

**देवसूनां हवींषि** अष्टौ सत्रस्य प्रायणीयेऽतिरात्रे अग्नीषोमीयपशुपुरोडाशमनु निर्वाप्याणि। १९।५.

**देविकाहवींषि** पञ्च सत्रस्य प्रायणीयेऽतिरात्रे अनूबन्ध्यस्य पशुपुरोडाशमनु निर्वाप्याणि। १९।७.

**देवीनां हवींषि** दश, सत्रस्य प्रायणीयेऽतिरात्रे अनूबन्ध्यस्य पशुपुरोडाशमनु निर्वाप्याणि इत्येके। १९।७.

**दैवः परिमरः** अधिदैवतं अध्यात्मं च, अग्निः आदित्यः चन्द्रमाः विद्युत् दिशः इति पञ्च देवताः इत्यधिदैवतम्। वाक्, चक्षुः, श्रोत्रं, मनः, प्राणः इति पञ्च देवताः इत्यध्यात्मम्। तदुपासनम्। शत्रुनाशः फलम्। कौआ. ४।१२–१३.

**दैवः स्मरः** नाम होमः वशीकारार्थः। आज्याहुतीर्जुहोति। 'वाचं ते मयि जुहोम्यसौ स्वाहा, प्राणं ते०, चक्षुस्ते०, श्रोत्रं ते०, मनस्ते०, प्रज्ञां ते मयि जुहोम्यसौ स्वाहा' इति। अथ धूमगन्धं प्रजिघ्राय आज्यलेपेन अङ्गान्यनुविमृज्य वाचंयमः अभिप्रव्रज्य संस्पर्शं जिगमिषेत् अभिवाताद्वा तिष्ठेत् संभाषमाणः। प्रियो हैव भवति। स्मरन्ते हैवास्य। कौआ. ४।४.

**द्वादशरात्रं** सा संवत्सरप्रतिमा। २२।१५.

**द्वितीयेऽहन्** गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति। 'प्र मंहिष्ठाय बृहते बृहद्रय:' इति षड्टृचं द्विस्तावत् यावन्मैत्रावरुणस्य कार्ष्णः अहरहःपर्यासो भवति। ३०।२.

**द्वितीयेऽहनि** पृष्ठ्ये षडहे। आज्यं व्यूढे समूढे च पृथक्। प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतं चोभयत्र समानम्। २२।२.

**द्विदेवत्याः** प्रातःसवने मैत्रावरुणश्च अच्छावाकश्च शंसतः। २८।९.

**द्विदेवत्यानां** प्रथमस्य पुरोऽनुवाक्ये माधुच्छन्दस्यौ अन्वाह। गार्त्समदीं च मैधातिथीं च उत्तरयोः। २८।२.

**द्विदेवत्येषु** नानुवषट् करोति। १३।५.

द्विदेवत्येषु पुरोऽनुवाक्या भवन्ति सर्वेषु च प्रस्थितेषु। ३०।११.

**द्विदेवत्यैश्चरन्ति**। पुरोळाशैश्चरित्वा द्विदेवत्यैश्चरन्ति। ऐन्द्रवायवः प्रथमः, मैत्रावरुणः (द्वितीयः), आश्विनः (तृतीयः)। अनवानं यजति। नानुवषट् करोति। ऐन्द्रवायवं पूर्वार्ध्ये सादयति, अभितः पश्चादितरौ उपनिदधाति। तानवगृह्यास्ते, नापिदधाति। १३।५. द्विदेवत्यानां प्रथमो भक्षः अथेळा अथ होतृचमसः। १३।६.

**धनलाभार्थो होमः** एकधनावरोधनं नाम। कौआ. ४।३.

**धाय्याः** मरुत्वतीये शस्त्रे अग्निष्टोमे। 'अग्निर्नेता० त्वं सोम० पिन्वन्त्यपो०'। १५।२–३.

**धिष्ण्यनमस्काराः** अग्निष्टोमे। सदः प्रसृप्स्यन् धिष्ण्यान्नमस्यति नमो नम इति। १३।१.

**धिष्ण्यविहरणं** अग्निष्टोमे। उपवसथे प्राञ्चमग्निं प्रणयन्ति वि धिष्ण्यान् हरन्ति। ९।१.

**नदः**। 'नदं व ओदतीनाम्' इति ऋक्। अस्य तदिदासेन विहरणं भवति पादशः, निष्केवल्ये महाव्रते। निष्केवल्यशब्दे द्रष्टव्यम्। कौआ. २।१.

**नभ्यस्थयोर्हविर्धानयोः** सतोः 'आवामुपस्थमद्रुहा' इति अन्वाह होता। ९।४.

**नाभानेदिष्ठं** होता शंसति षष्ठेऽहन्। ३०।४.

**नाराशंसीः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन्। ३०।५.

**निःश्रेयसादानम्**। प्राणः इन्द्रियादिषु श्रेष्ठः। तदुपासनम्। कौआ. ४।१४.

**निगदं** पञ्चदशपदं उपसंदधाति 'अग्ने महाँ असि ब्राह्मण भारत' इत्यन्ते 'देवेद्धो मन्विद्धः' इत्यादिम्। तस्य सप्त पदानि समस्य अवस्येत्। अथ चत्वारि, अथ चत्वारि। सामिधेन्यन्ते। दर्शपूर्ण०। ३।२.

**निर्भुजप्रवादाः**। संहिता–पद–क्रमोपासनम्। कौआ. ७।११.

**निवित्** आज्यशस्त्रे तूष्णींशंसोत्तरम्। द्वादशपदां पुरोरुचमुपसंशंसति। १४।१.

निवित् पुरस्तात् सूक्तस्य प्रातःसवने धीयते, मध्ये सूक्तस्य माध्यंदिने सवने, उत्तमाः परिशिष्य तृतीयसवने। १४।१.

**निविद्धानीयं** आग्निमारुते वैश्वानरीयं सूक्तं ऐकाहिकं महाव्रते। कौआ. २।१८.

निविद्धानीयं सूक्तं मरुत्वतीये शस्त्रे अग्निष्टोमे 'जनिष्ठा उग्रः०' । १५।३.

निविद्धानीयं सूक्तं महाव्रते मरुत्वतीये 'महाँ इन्द्रो नृवदाचर्षणि प्राः' इति । त्रैष्टुभे निविदं दधाति । कौआ. १।३.

**निविद्धानीयानि** आनुष्टुभानि स्वरसामसु । २४।४.

**निष्केवल्यं** अग्निष्टोमे माध्यंदिने । प्रतिपत्–बृहती द्वे तिस्रः करोति पुनरादाय । १५।४. अनुरूपः, धाय्या, प्रगाथः, सूक्तं 'इन्द्रस्य नु वीर्याणि' पञ्चदशर्चं निविद्धानीयम् । निविदः एकैकं पदमवग्राहं शंसति, उत्तमेन प्रणौति । अत्वरमाणः शंसति । नितरां परिधानीयां शंसेत् । अश्वं ददाति । १५।४. याज्या विराट् 'पिबा सोममिन्द्र मन्दतु त्वा' इति । पदं परिशिष्य अर्धर्चे अवानिति, उत्तरेणार्धर्चेन वषट् करोति । अनुवषट् करोति । १५।५.

निष्केवल्यं अभिप्लवषडहे **प्रथमेऽहनि** ज्योतिषि । सूक्तं 'आ याह्यर्वाङुप वन्धुरेष्ठाः' । २०।२. **द्वितीयेऽहनि** गवि 'सुत इत् त्वं निमिश्लः' । २०।३. **तृतीयेऽहनि** आयुषि, 'इन्द्रस्य नु वीर्याणि' । २०।४. **चतुर्थेऽहनि** गवि 'उग्रो जज्ञे वीर्याय स्वधावान्' । २१।२. **पञ्चमेऽहनि** आयुषि 'एतायामोपगव्यन्त' । २१।३. **षष्ठेऽहनि** ज्योतिषि 'यो जात एव प्रथमो' । २१।४.

निष्केवल्यं अविवाक्येऽहनि ऐकाहिकं 'इन्द्रस्य नु वीर्याणि' । २७।२.

निष्केवल्यं चतुर्विंशेऽहनि 'तदिदास भुवनेषु' बृहद्दिवः । १९।९.

निष्केवल्यं छन्दोमे **प्रथमे** । द्वेद्वे सूक्ते निष्केवल्यमरुत्वतीययोः शस्येते । 'तमु ष्टुहि यो, अभि त्यं मेषं' । २६।९. **द्वितीये** । त्रैष्टुभानां निष्केवल्यानां **प्रथमं** 'त्वं महाँ इन्द्र तुभ्यं ह क्षाः ।' द्वितीयं 'त्वं महाँ इन्द्र यो ह शुष्मैः' । तृतीयं 'अपूर्व्या पुरुतमान्यस्मै' । चतुर्थं 'तां सुते कीर्तिं मघवन्' । पञ्चमं जागतम् 'इमां ते धियं प्र भरे' । पञ्चपञ्च सूक्तानि निष्केवल्यमरुत्वतीययोः शस्यन्ते मध्यमे छन्दोमे । २६।१२. **तृतीये** । त्रैष्टुभानां निष्केवल्यानां मध्ये **प्रथमं** 'आ सत्यो यातु मघवान्' । द्वितीयं 'अस्मा इदु प्र तवसे तुराय' । तृतीयं 'द्यौर्नय इन्द्राभिभूमार्यः ।' चतुर्थं 'तत्तदिन्द्रियं परमं' । पञ्चमं जागतं 'अहं भुवं वसु नः' । षष्ठं जागतं 'विश्वजिते धनजिते' । षट् अन्ततो निष्केवल्ये सूक्तानि शस्यन्ते । २६।१६.

निष्केवल्यं पृष्ठ्ये षडहे **प्रथमेऽहनि** 'आ न इन्द्रो दूरात्' व्यूढे समूढे च संपातौ निष्केवल्यमरुत्वतीययोर्भवतः प्रथमेऽहन् । २२।१. **द्वितीयेऽहनि** व्यूढे समूढे च 'या त ऊतिरवमा या' । २२।२. **तृतीयेऽहनि** स्तोत्रियः 'यद् द्याव इन्द्र ते शतम्' वैरूपस्य स्तोत्रियः । अनुरूपः 'यदिन्द्र यावतस्त्वम्' । सामप्रगाथः 'इन्द्र त्रिधातु शरणम्' । इन्द्रसूक्तं 'अहं भुवं वसु नः पूर्व्यः' । निविद्धानीयं 'यो जात एव प्रथमो' इति । त्रैष्टुभे निविदं दधाति । एतत् 'इन्द्रतनूः' नाम सूक्तम् । २२।४. **चतुर्थेऽहनि** 'त्यमु वः सत्रासाहं' गायत्रम् । २२।८. **पञ्चमेऽहनि** 'तमिन्द्रं वाजयामसि' गायत्रम् । २३।२. **षष्ठेऽहनि** 'उप नो हरिभिः सुतम्' गायत्रम् । २३।७.

निष्केवल्यं महाव्रते । हिंकारेण प्रतिपद्यते एतदुक्थम् । राजनं पृष्ठं भवति । अनिरुक्तासु भवति । कवतीषु स्यादिति हैके आहुः । तूष्णींशंसं उपांशु शंसति । स्तोत्रियस्तृचः 'तदिदास भुवनेषु' नदेन उपसृष्टं शंसति 'नदं व ओदतीनाम्' । त्रैष्टुभानि पूर्वाणि पदानि करोति नदस्य उत्तराणि । प्रथमेन त्रैष्टुभेन पदेन प्रथमं नदस्य पदमुपसंधाय अवस्यति, द्वितीयेन त्रैष्टुभेन द्वितीयं संधाय प्रणौति । तृतीयेन त्रैष्टुभेन तृतीयं संधायावस्यति, चतुर्थेन त्रैष्टुभेन चतुर्थं संधाय प्रणौति । एवं विदूतां प्रथमां त्रिः शंसति । पराचीः उत्तराः एवं विदूता एव ( एवं पञ्चविंशतेः ऋचां नदेन विहरणम् ) । या तृतीया सूक्तस्य, तस्या उत्तरमर्धर्चं उत्सृजति नदस्य चोत्तरम्, सोऽयं मुखस्य विवरः । तौ पुरस्तात् द्विपदानां शंसति । आत्मानं शस्त्वा अथ सूददोहसं शंसति 'ता अस्य सूददोहसः' इति । कौआ. २।१. अथ शीर्षण्यानि शंसति, त्रीणि तृचानि भवन्ति । तानि त्रीणि

पुनरेकैकं त्रेधात्रेधा, ता नव ऋचो भवन्ति। २।२. अथ ग्रैवं शंसति, तिस्र ऋचो भवन्ति उष्णिगुत्तमा। २।३. अथ अक्षां ( बाहुम् ) शंसति, त्रिष्टुप् भवति 'ऋष्वा त इन्द्र स्थविरस्य बाहू'। अथ रथंतरस्य स्तोत्रियानुरूपौ शंसति। धाय्यां शंसति, सा वै दक्षिणे भागे धीयते। अथ राथंतरं प्रगाथं शंसति। सूक्तम् 'य एक इद्ध-व्यश्चर्षणीनां०' तत् पच्छः। तस्य द्वितीयामुद्धृत्य 'विश्वो ह्यन्यो अरिराजगाम' इति या एतस्य द्वितीया, तामिह द्वितीयां करोति। २।४. अथ प्रहस्तकं शंसति, ता वै तिस्र ऋचो भवन्ति। अतिच्छन्दाः प्रथमा। दक्षिणतः पक्षो राथंतरः, उत्तरतः पक्षो बार्हतः। एतौ पक्षौ चतुर्विंशौ। २।५. अथ अनूकं चतुरुत्तराणि शंसति, ता एकविंशतिर्ऋचो भवन्ति, तानि सप्त तृचानि। २।६. अशीतीः शंसति दक्षिणं पार्श्वं गायत्री, सव्यं औष्णिही, मध्यं बार्हती, त्रिष्टुभौ अन्तरेण, वैश्वामित्र्यौ अभिरूपे। २।७. गायत्री अशीतिः 'महाँ इन्द्रो य ओजसा' इ०। २।८. बार्हती अशीतिः 'या इन्द्र भुज आभर' इ०। 'अयं ते अस्तु हर्यतः' सूक्तं, 'आ मन्द्रैरिन्द्र हरिभिः' सूक्तम्, एते अन्ततः शंसति। २।९. औष्णिही अशीतिः 'इन्द्रः सुतेषु सोमेषु' इ०। 'इन्द्राय साम गायत' इति अन्ततः शंसति (गायत्रीषु)। सामनिधनैर्हैके गायत्रीरुष्णिहः संपादयन्ति। चतुरक्षराणि उ हैके पुनराददते। बार्हत्या अशीत्या अशीतिं चतुरक्षराणि उद्धरन्ति, काकुभेभ्यः प्रगाथेभ्यः विंशतिं चतुरक्षराणि, तानि चतुःशतं ( ८०×चतुरक्षर = ३२०+[२०×चतुरक्षर = ८०] = ४०० ) चतुरक्षराणि चतुःशते गायत्रीषु उपदधति, तथा ता गायत्रीरुष्णिहः संपद्यन्ते इति। नाद्रियेत ( तत् कुतः ? ) अत्रैव संपन्नं इन्द्राय साम गायतेति। २।१०. अथ वशं शंसति। उदरं वै वशः। अथैतौ विदूतौ ( कौआ. २।१. ) अर्धर्चौ शंसति। अथ सूददोहसम्। २।११. अथ द्विपदाः शंसति। २।१२. अथ ऐन्द्राग्नं सूक्तं गायत्रीशंसं शंसति। २।१३. आवपनं शंसति। २।१४. अथ आनुष्टुभं समाम्नायं शंसति 'स प्रत्नथा कविवृधः' इति तृचं, गायत्री उत्तमा 'शास इत्था महाँ असि'। २।१५. अथ त्रिष्टुप्शतं शंसति हैरण्यस्तूपीयं च, यातऊतीयं च, बार्हतराथंतरे, सजनीयं च, 'अध्वर्यवो भरतेन्द्राय सोमम्' इति च ताः सप्तविंशतिर्ऋचो भवन्ति। विश्वामित्रस्य शंसेत्, वामदेव्यस्य शंसेत्, वसिष्ठस्य शंसेत्। तत्र पुरस्तात् उदुब्रह्मीयस्य पदानुषङ्गान् शंसति, उदुब्रह्मीयस्य अर्कवती उत्तमा, त्रिःशस्तया परिदधाति। उक्थवीर्यं जपति ऐकाहिकं पूर्वं, माहाव्रतिकं उत्तरं 'महदसि' इति। २।१६. तदेतद् बृहतीसहस्रं संपद्यते। अनुष्टुप्संपन्नमु हैके। बृहतीसंपन्नं इति त्वेव स्थितम्। त्रिरेवाह्वयते। ऐकाहिकी याज्या। अननुवषट्कृते एव प्रेङ्खं ग्रथ्नन्ति। कौआ. २।१७.

निष्केवल्यं विश्वजिति, सत्रे। 'तदिदास भुवनेषु'। २५।११.

निष्केवल्यं विषुवति, सत्रे। बृहदेतस्याह्नः पृष्ठं स्यादिति हैके, यद्यु सूर्यवति प्रगाथे बृहत् कुर्युः सूर्यवतश्च प्रगाथान्। 'इन्द्रः किल श्रुत्या अस्य वेद' इत्युक्थमुखीया। महादिवाकीर्त्यमेव एतस्याह्नः पृष्ठं स्यादिति सा स्थितिः। तद्धैके त्रिष्टुप्सु कुर्वन्ति, बृहतीषु स्यादिति हैक आहुः, जगतीषु स्यादिति त्वेव स्थितम्। २५।४. स्तोत्रियः तृचः 'विभ्राट् बृहत् पिबतु'। अनुरूपः तृचः 'वि सूर्यो मध्ये अमुचद्रथं दिवः' जागतम् इदं द्वयम्। 'विश्वाहा त्वा सुमनसः' इति त्वेव स्थितः सौर्यः। सामप्रगाथः 'बण्महाँ असि सूर्य'। बृहद्रथंतरयोर्योनी शंसति। 'इन्द्र किल श्रुत्या अस्य वेद' इत्युक्थमुखीया, 'शं नो भव चक्षसा' इति त्वेव स्थिता सौरी। त्रैष्टुभं सूक्तम् 'य एक इद्धव्यश्चर्षणीनाम्' एवं नु यदि महादिवाकीर्त्यं पृष्ठं भवति। यद्यु वै बृहत्, स्वयोनौ कुर्युः। बृहत आतानं शस्त्वा रथंतरस्य योनिं शंसति 'इन्द्रः किल श्रुत्या' इत्युक्थमुखीया। २५।५. 'द्यौर्नय इन्द्राभिभूमार्यः' इति त्रैष्टुभम्। न चेत् स्वयोनौ, स्तोत्रियः 'आयन्त इव सूर्यम्', अनुरूपः 'यद् द्याव इन्द्र ते शतम्', सामप्रगाथः 'यः सत्राहा विचर्षणिः', बृहद्रथंतरयोर्योनिं शंसति, 'इन्द्रः किल श्रुत्या' इत्युक्थमुखीया। 'य एक इद्धव्यश्चर्षणीनाम्' इति त्रैष्टुभम्। अनुभयसामानं चेत् कुर्युः, समानं आ

उक्थमुखीयायाः, उद्धरेद् बृहद्रथंतरयोर्योनी। 'तमु ष्टुहि यो अभिभूत्योजाः' इति त्रैष्टुभं, समानमुत्तरम्। 'अभि त्वं मेषं पुरुहूतं' इति जागतम्। २५।६. 'प्र ते महे विदथे' इति, तस्य नव शस्त्वा आहूय निविदं दधाति। सर्वहरेश्चतस्रः अभ्युदैति, 'आ सत्यो यातु मघवान्' इत्येकविंशतिः, ताः पञ्चविंशतिः। 'विश्वजिते धनजिते' इति षट् जगत्यः। ता एकत्रिंशत्। तासु जगतीषु दूरोहणं रोहति, पच्छः प्रथमं, अर्धर्चशो द्वितीयं, त्रिपच्छः तृतीयं, केवलीं, स आवेशः। त्रिपच्छः, अर्धर्चशः, पच्छः। ताः सप्त। ता अष्टत्रिंशत्। 'एष प्र पूर्वीरव तस्य चम्रिषः' इति जागतं बहूवृचं, ताश्चतुश्चत्वारिंशत्। 'पतङ्गमक्तमसुरस्य' इति तिस्रः, 'उरुं नो लोकमनु नेषि' इति त्रिःशस्तया परिधानीयया ताः पञ्चाशत्। इति पैङ्गी संपत्। २५।७. अथ कौषीतकी। समानं आ उक्थमुखीयायाः। ऋतुर्जनित्रीयमुद्धृत्य बृहद्रथंतरे, तस्यैवैकादश स्वयोनौ, नव अन्यत्र। 'इन्द्र याहि हरिभिः' इति पञ्चदश। बरोः एकादश शस्त्वा सर्वहरेर्वा, निविदं मध्ये एकशतस्य एकपञ्चाशतं शस्त्वा, द्वे बरोरभ्युदैति सर्वहरेर्वा (च तिस्रः)। 'आ सत्यो यातु मघवान्' इत्येकविंशतिः। 'विश्वजिते' इति षट्। दूरोहणीयाः सप्त। 'अभूरेको रयिपते' इति त्रैष्टुभं पञ्चर्चम्। 'त्यमू षु वाजिनं' इति तिस्रः। 'उरुं नो लोकमनु नेषि' इति त्रिःशस्तया परिधानीयया, ताः पञ्चाशत्। पूर्वा एकपञ्चाशत्। ता एकशतमृचो भवन्ति। २५।८.

निष्केवल्यं स्वरसामनि **प्रथमे**। 'यस्ते साधिष्ठोऽवसे' आनुष्टुभं राथंतरम्। तदाहुः नानुष्टुप्सु निविदं दध्यात्। आनुष्टुभानि पूर्वाणि शस्त्वा त्रैष्टुभेषु निविदं दधाति। 'अर्वाग् रथं विश्ववारं त उग्र' इति राथंतरे (निविदं दध्यात्)। 'कदून्वस्याकृतं' इति कद्वान् प्रगाथः। 'स्वरन्ति त्वा सुते नरः' इति द्वृचः। 'अध्वर्यो वीर' इति सवनधरणम्। **द्वितीये**। 'गायन्ति त्वा गायत्रिणः' आनुष्टुभं, बार्हतम्। नानुष्टुप्सु निविदं दधाति। आनुष्टुभं शस्त्वा त्रैष्टुभे 'अपादित उदु नश्चित्रतमः' इति बार्हते निविदं दध्यात्। 'इमा उ त्वा पुरूवसो' इति कद्वान् प्रगाथः। रथंतरस्य योनिः, अथ बृहतः। 'दाना मृगो न वारणः' इति द्वृचः। 'इदं त्यत्पात्रमिन्द्रपानम्' इति सवनधरणम्। **तृतीये**। 'इन्द्रं विश्वा अवीवृधन्' आनुष्टुभं राथंतरम्। नानुष्टुप्सु निविदं दध्यात्, आनुष्टुभं शस्त्वा त्रैष्टुभे 'सं च त्वे जग्मुर्गिर इन्द्र पूर्वीः' इत्यत्र निविदं दध्यात्। 'इमा उ त्वा पुरूवसो' इति कद्वान् प्रगाथः। २४।६-८.

**नेष्टा** 'अग्ने पत्नीरिहावह' इति यजति। प्रस्थितयाज्या। २८।३.

**नौधसं** ब्राह्मणाच्छंसिनः पृष्ठम्। निधनवत्। २९।३.

**न्यूङ्खयति** अच्छावाकः एवयामरुतम्। ३०।८.

न्यूङ्खयति ब्राह्मणाच्छंसी षष्ठेऽहन् वृषाकपिं पङ्क्तिशंसम्। ३०।५.

**पञ्चमेऽहन्** पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति। ३०।४.

**पञ्चसंचराणि** समानानि वरुणप्रघासेषु। ५।३. साकमेधेषु (षट् संचराणि)। ५।५. शुनासीर्ये। आग्नेयः सौम्यः सावित्रः सारस्वतः पौष्णः इति अधिकम्। ५।८.

**पत्नीं** वेदे न वाचयति दीक्षणीयायामग्निष्टोमे। ७।३.

पत्नीं वेदे वाचयति होता दर्शपूर्ण०। ३।९.

**पत्नी** वेदतृणानि अन्तरा ऊरू कुरुते दर्शपूर्ण०। ३।९.

**पत्नीसंयाजान्ता** दीक्षणीया। ८।२.

**पत्नीसंयाजैः** गार्हपत्ये चरन्ति। चत्वारो भवन्ति। उपांशु भवन्ति। सोमं, त्वष्टारं, देवानां पत्नीः, अग्निं गृहपतिम्, इति यजति। ऋचं जपति। इळामुपह्वयते। मार्जयते। दर्शपूर्ण०। ३।९.

**पत्नीसंयाजैः** चरन्ति पितृयज्ञे। ५।७.

**पदम्**। संहितापदक्रमज्ञानमाहात्म्यम्। कौआ. ७।११.

**पयः** नाम साम महाव्रते। कौआ. १।४.

**पयसा** जुहुयात् अग्निहोत्रम्। अशनस्यैव जुहुयात्। २।१.

**पयस्या** मैत्रावरुणी दाक्षायणयज्ञे। ४।४.

पयस्या मैत्रावरुणी सत्रस्य प्रायणीयातिरात्रस्य संस्थितायामुदवसानीयायाम्। नैतया अनिष्ट्वा अग्निचित् मैथुनं चरेत्। १९।७.

पयस्या मैत्रावरुणी । 'सोमेनेष्ट्वा सौत्रामण्या यजेत मैत्रावरुण्या वा पयस्यया यजेत' । १६।१०.

**परिधानं** परिधानीयाया अनुवचनम् । दक्षिणा तिष्ठन् परिदधाति । सोमप्रणयने हविर्धाने अपरया द्वारा प्रपाद्यमाने सोमे तेनैव होता अनुसमीयात् । उत्तरतो दक्षिणा तिष्ठन् परिदधाति । ९।६.

**परिधानीया** अग्निमन्थनीयासु चातुर्मास्येषु आतिथ्यायां च 'तं मर्जयन्त सुक्रतुम्' इति । पशौ तु 'यज्ञेन यज्ञम्' इति परिधानीया । ८।१–२.

परिधानीया 'परि त्वा गिर्वणो गिरः' इति हविर्धानप्रवर्तनीयासु । ९।४.

परिधानीया यूपाञ्जनीयासु 'युवा सुवासाः' । एकयूपे एकपशौ, एकयूपे पश्वैकादशिन्यां, यूपैकादशिन्यां च । १०।२.

**परिधानीयायाः** कालः आश्विनशस्त्रस्य । यदा आदित्यः रराट्यामभिसर्पेत्, यदैनं स्वयं होता निर्जानीयात्, यदाऽस्य लोहितमापीयात्, यदैनं सर्वे रश्मयः प्रत्युत्पद्येरन्, स कालः परिधानस्य । १८।४.

**परिभाषा** अर्धर्चोदर्काणि ह वा एतानि सूक्तानि भवन्ति, पदोदर्काण्येकाणि, अर्धपदोदर्काण्येकाणि, अथैतत् तृतीयपदोदर्कमेव ( तृतीयेऽहनि 'परावतो ये' इति । वैश्वदेवे शस्त्रे ) । २२।५.

परिभाषा ऋग्विषया । समानेऽहनि एकैव ऋक् शस्त्रद्वये अनुवक्तव्या न वेति मीमांसायां उच्यते 'न ह वा ऋक् शस्त्रेण यातयामा भवति, नानुवचनेन । वषट्कारेणैव सा यातयामा भवति समानेऽहन्' । २२।१.

परिभाषा बृहद्रथंतरे 'यत्र तु क्व च एते सामनी समानेऽहन् संनिवपेयाताम्, अन्वेव तत्र इतरस्य इतरस्य वा योनिमनुशंसेत्' । २६।९.

**परिमादान्** जपान् जपति आज्याहुत्यनन्तरम् । महाव्रते । कौआ. १।४.

**परिवती ऋक्** 'द्युचिरक्तुभिः परिपात' । प्रवर्ग्ये पूर्वे परिधानीया । ८।६.

**परिवहणम्** । सोमं क्रीतं दक्षिणा ( दिशि ) परिवहन्ति । ७।६.

**परिवीयमाणाय** यूपायान्वाह 'युवा सुवासाः' इति । १०।२.

**पर्यासः** । अच्छावाकः एकपर्यासः । मैत्रावरुणश्च ब्राह्मणाच्छंसी च द्विपर्यासौ । अच्छावाकः भारद्वाजात् इतरौ पर्यासौ वैष्णवे विपर्यस्यति । ब्राह्मणाच्छंसिनः भारद्वाजः अहरहः पर्यासो भवति । मैत्रावरुणस्य कार्ष्णः अहरहः पर्यासो भवति । ३०।९.

**पवमानः** नानूत्थेय इत्याहुः । यदि तु स्वयं होता स्यात् अनूत्तिष्ठेत् । औपगात्रं ह्यस्य भवति । १२।५.

**पवमानां** नाम अग्नेः तनूं देवाः अप्सु अदधुः । १।१.

**पवमानेष्टयः** उपांशु । १।१.

**पवमानेष्टिषु** सद्वन्तौ आज्यभागौ ( 'त्वमग्ने सप्रथाः, सोम यास्ते' ) । १।१.

**पवमानेष्टौ** पवमानो देवता पौर्णमासं तन्त्रम् । ईळितवत्यौ हव्यवाड्वत्यौ संयाज्ये । अग्न्याधेये । उपांशु ( 'तं हि शश्वन्त ईळते, ते स्याम ये अग्नये' इति । प्रधानस्य तु 'अग्न आयूंषि पवसे' 'अग्ने पवस्व स्वपाः' इति ) । १।१.

**पवमाने** स्तुते एतं जपं जपेत्– 'उपहूता देवा अस्य सोमस्य त्वा भक्षयामि०' इति । १२।५.

पवमाने ( मध्यंदिने ) स्तुते दधिघर्मेण चरन्ति । १५।१.

पवमाने ( आर्भवे ) स्तुते पशुना चरन्ति, अथ हविष्पङ्क्त्या चरन्ति । १६।१.

**पवित्रं** वै पावमान्यः । ३०।८.

**पशवः** चत्वारः उपांशु भवन्ति सौर्यः सावित्रः प्राजापत्यः वाग्देवत्य इति । अथान्ये निरुक्ताः । २५।१०.

**पशुं** श्रपयन्ति माध्यंदिने सवने । १२।६.

**पशुः** आनीतः अनुपाकृतः यदि म्रियेत, ऋत्विग्भ्यः तं कारयेत् । अथान्यं तद्रूपं तद्देवत्यं पशुमालभेरन् । तमाप्रीतं पर्यग्निकृतमुदञ्चं नयेयुः । तं संज्ञपयेयुः । तस्यानुज्ञायं इतरं कर्षयेयुः । तयोर्नाना वपे उत्खिद्य नाना श्रपयित्वा नाना अवदाय समाने वषट्कारे जुहुयुः । तयोर्नानेव पशुपुरोळाशौ श्रपयित्वा नाना अवदाय समाने वषट्कारे जुहुयुः । तयोर्नानैव हविषी श्रपयित्वा नाना



अवदाय समाने वषट्कारे जुहुयुः । एव तृतीयमुदौ । एवं जाघन्यौ । यदि तु एकयैव आप्रिया आप्रीः स्यात् तेनैव प्रचरेयुः इति सा स्थितिः । १८।१२.

पशुः त्वाष्ट्रः सत्रस्य प्रायणीयेऽतिरात्रे अनूबन्ध्यस्य वपायां संस्थितायाम् । पत्नीशाले उपांशु चरन्ति । पर्यग्निकृतमुत्सृजन्ति, न संस्थापयन्ति । १९।६.

पशुः महाव्रते ऐन्द्रः ऋषभः प्राजापत्यश्चाजः उपालम्भ्यौ । कौआ. ११।१.

**पशुकामस्य** अङ्गारेषु अग्निहोत्रं जुहुयात् । २।२.

पशुकामस्य यज्ञः इळादधः । ४।५.

**पशुना** अङ्गैः तृतीयसवने चरन्ति । १२।६.

पशुना चरन्ति आर्भवे पवमाने स्तुते, अथ हविष्पङ्क्त्या चरन्ति । ३०।१.

**पशुपुरोडाशेन** माध्यंदिने चरन्ति । १२।६.

**पशुबन्धेषु** सप्तदश सामिधेन्यः । १।१.

**पशौ** अग्निमन्थनीयासु 'यज्ञेन यज्ञमयजन्त देवाः' इति त्रिष्टुप् परिधानीया । त्रिः प्रथमया त्रिरुत्तमया सप्तदश संपद्यन्ते । अग्निमन्थनम् । ८।१-२.

पशौ एकयूपे एकपशौ । 'यूपाञ्जनीयाः' इत्यत्र द्रष्टव्यम् । १०।२.

**पात्नीवतग्रहेण** चरन्ति घृतयागसौम्ययागोत्तरम् । नानुवषट् करोति । आज्यमुपांशु यजति, नानुवषट् करोति । मद्वती याज्या । एनया आग्नीध्रो यजति । १६।६.

**पात्नीवतस्य** अग्नीत् उक्थे अन्तरेण यजति तृतीयसवने । ३०।१.

**पापोक्तस्य** पावमानीभिरभिष्टुयात् प्रवर्ग्ये । ८।५.

**पारिक्षितीः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् ।३०।५.

**पालाशं** ब्रह्मवर्चसकामः कुर्वीत यूपम् । १०।१.

**पालाशीं** समिधमभ्यादधाति अग्निहोत्रहोमार्थम् । २।२.

**पावकां** अग्नेः तनूं वायौ देवा अदधुः । १।१.

**पावकेष्टिः** अग्न्याधेये द्वितीया । आमावास्यं तन्त्रम् । द्व्यग्नी संयाज्ये ( 'अग्निमग्निं हवीमभिः, अग्निनाऽग्निः समिध्यते' ) । अर्थात् द्वितीयेष्टौ पावकश्च शुचिश्च द्वे देवते । पक्षान्तरं तु तिस्र इष्टयः एकैका एव देवता इति । आशु । १।१.

**पावमानीं** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।८.

**पावमानीभिः** । अर्बुदेन च पावमानीभिश्च ग्रावणोऽभिष्टौति माध्यंदिनपवमानात् प्राक् । १५।१.

**पावमान्यः** पवित्रम् । ३०।८.

**पितापुत्रीयं संप्रदानम्** । संप्रत्तिकर्मैवदेतत् परन्तु भूयान् भेदः । पिता पुत्रं प्रेष्यन् आह्वयति । नवैस्तृणैरगारं संस्तीर्य अग्निमुपसमाधाय उदकुम्भं सपात्रमुपनिधाय अहतेन वाससा संप्रच्छन्नः पिता शेते । एत्य पुत्रः उपरिष्टादभिनिपद्यते इन्द्रियैरिन्द्रियाणि संस्पृश्य । अपिवा अस्मा आसीनाय अभिमुखायैव संप्रदध्यात् । अथास्मै संप्रयच्छति 'वाचं मे त्वयि दधानि' इति पिता, 'वाचं ते मयि दधे' इति पुत्रः । प्राणं मे त्वयि दधानि, प्राणं ते मयि दधे । चक्षुर्मे त्वयि दधानि, चक्षुस्ते मयि दधे । श्रोत्रं मे त्वयि दधानि, श्रोत्रं ते मयि दधे । अन्नरसान् मे त्वयि दधानि, अन्नरसाँस्ते मयि दधे । कर्माणि मे त्वयि दधानि, कर्माणि ते मयि दधे । सुखदुःखानि मे त्वयि दधानि, सुखदुःखानि ते मयि दधे । आनन्दं रतिं प्रजातिं मे त्वयि दधानि, आनन्दं रतिं प्रजातिं ते मयि दधे । इत्यां मे त्वयि दधानि, इत्यां ते मयि दधे । मनो मे त्वयि दधानि, मनस्ते मयि दधे । प्रज्ञां मे त्वयि दधानि, प्रज्ञां ते मयि दधे । यद्यु वै उपाभिगदः स्यात् समासेनैव ब्रूयात् । 'प्राणान् मे त्वयि दधानि' इति पिता 'प्राणांस्ते मयि दधे' इति पुत्रः । अथ दक्षिणावृत उपनिष्क्रामति, तं पिता अनुमन्त्रयते 'यशो ब्रह्मवर्चसं कीर्तिस्त्वा जुषताम्' इति । अथेतरः सव्यमनु अंसमभ्यवेक्षते पाणिना अन्तर्धाय वसनान्तेन वा प्रच्छाद्य 'स्वर्गान् लोकान् कामानाप्नुहि' इति । स यद्यगदः स्यात्, पुत्रस्यैश्वर्ये पिता वसेत्, परि वा व्रजेत् । यद्यु वै प्रेयात् तथैवैनं समापयेयुः, यथा समापयितव्यो भवति । कौआ. ४।१५.

**पितृयज्ञः** दक्षिणासंस्थः । ५।७.

पितृयज्ञः महापितृयज्ञः पित्र्या । साकमेधेषु श्वोभूते अपराह्णे । एकां सामिधेनीमन्वाह उशन्तस्त्वा इति ।

अनुष्टुप् भवति । यजमानस्यार्षेयं नाह । एतं ( आवाहन- ) निगममन्वाह- सोमं पितृमन्तं पितॄन्वा सोमवतः, पितॄन् बर्हिषदः, पितॄनग्निष्वात्तान् इत्यावाहयति, अग्निं कव्यवाहनमावाहयति । न हैके स्वं महिमानमावाहयन्ति, आवाहयेत् इति त्वेव स्थितम् । ५।६. प्रयाजानुयाजेभ्यो बर्हिष्मन्तौ उत्सृजति । जीवनवन्तौ आज्यभागौ ( आ नो अग्ने सु चेतुना० त्वं सोम महे भगं० इति ) । त्रीणि वै हवींषि भवन्ति । तिस्रस्तिस्र एकैकस्य हविषो भवन्ति ( द्वे अनुवाक्ये एका याज्या ), अग्निं कव्यवाहनमन्ततो यजति । इळामुपहूय अवघ्राय न प्राश्नन्ति । पवित्रवति मार्जयन्ते । ऋचं जपन्ति ( अया विष्ठा जनयन् कर्वराणि इति ) । उदञ्चः परेत्य गार्हपत्याहवनीयौ उपतिष्ठन्ते । प्राञ्च उपनिष्क्रम्य आदित्यमुपतिष्ठन्ते । सूक्तवाके यजमानस्य नाम न गृह्णन्ति । पत्नीसंयाजैर्न यजन्ति । ५।७.

**पुत्रमूर्धावघ्राणं** प्रवासादागत्य । कौआ. ४।११.

**पुनराधेयम्** । कालः, पुरोडाशः पञ्चकपालः । १।३. विभक्तयः प्रयाजानुयाजेषु, आज्यभागौ, याज्यापुरोऽनुवाक्याः प्रधानस्य । १।४. उपांशु, उच्चैः आग्नेयं सर्वमेके तत्र, दक्षिणा, आदित्या ( अदितेः ) द्वितीया इष्टिः । १।५.

**पुनराधेयिकी** इष्टिः । द्वितीयानुयाजान्तं उपांशु, तृतीयानुयाजादि उच्चैः । १।५.

**पुरुषाश्चत्वार** इति बाध्वः । शारीरपुरुषः छन्दःपुरुषः वेदपुरुषः महापुरुषः इति । ( १ ) दैहिक आत्मा, तस्य अशरीरः प्रज्ञात्मा रसः । ( २ ) अक्षरसमाम्नायः, तस्य रसः अकारः । ( ३ ) वेदा एव, तस्य ब्रह्म रसः । ( ४ ) संवत्सर एव, तस्य आदित्यो रसः । स यश्चायमशरीरः, प्रज्ञात्मा, यश्चासावादित्यः एकमेतदिति विद्यात् । कौआ. ८।३.

**पुरोडाशस्विष्टकृतः** पुरोऽनुवाक्या वैश्वामित्री ' इमं नो यज्ञममृतेषु धेहि ' । २८।२.

**पुरोडाशानामनुसवनं** पुरोऽनुवाक्ये वैश्वामित्रीमन्वाह । २८।२.

**पुरोरुक्** प्रउगे शस्त्रे ' वायुरग्रेगा० ' वैश्वदेवीं पुरोरुचं शंसति । सा षट्पदा भवति । तस्यै द्वेद्वे पदे अवग्राहं शंसति । अत्र हैके सारस्वतीं पुरोरुचं शंसन्ति, न तथा कुर्यात् । अग्निष्टोमे । १४।४-५.

**पुरोरुचं** ( निविदं ) द्वादशपदां आज्यशस्त्रे उपसंशंसन्ति । १४।१.

**पृष्ठं** बृहत् चतुर्विंशेऽहनि । १९।८.

पृष्ठं राजनं निष्केवल्यस्य महाव्रते । कौआ. २।१.

**पृष्ठम्** । वामदेव्यं मैत्रावरुणस्य पृष्ठं भवति । नौधसं ब्राह्मणाच्छंसिनः निधनवत् । कालेयमच्छावाकस्य, तद्वा ऐडं बृहतीषु कुर्वन्ति । एतत् ( सर्वं ) प्रायणीयोदयनीययोः, ऐकाह्यं च भवति । २९।३. मैत्रावरुणस्य दशमेऽहन् ( मा चिदन्यद्, मा भेम मा ' इति ) मैधातिथं पृष्ठम् । २९।५.

**पृष्ठानि** स्वरसामसु । यदि स्वराणि पृष्ठानि भवन्ति, बृहद्रथंतरे एव तर्हि सामगाः पवमानेषु कुर्वन्ति । यद्यु बृहद्रथंतरे पृष्ठे स्याताम्, स्वराणि त्वेव सामगाः पवमानेषु कुर्वन्ति । स्वराणि त्वेव पृष्ठानि स्युः इति ह स्माह कौषीतकिः । २४।८.

**पृष्ठ्ये** षडहे प्रथमेऽहनि आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम् । २२।१. द्वितीयेऽहनि । २२।२. तृतीयेहनि । २२।३-५. चतुर्थेऽहनि । २२।६-९. पञ्चमेऽहनि । २३।१-३. षष्ठेऽहनि । २३।६-८. विशेषस्तु आज्यादिशब्दे द्रष्टव्यः ।

**पोता**, ' मरुतो यस्य हि क्षये ' इति मारुत्या यजति, प्रस्थितयाज्या प्रातःसवने । २८।३.

**पोषवन्तौ** आज्यभागौ गृहमेधीये- ' अग्निना रयिमश्नवत्, गयस्फानः ' । ५।५.

**पौरुषकामस्य** यज्ञः साकंप्रस्थाय्यः । ४।९.

**पौर्णमासीं** पूर्वामुपवसेत् इति पैङ्ग्यम् । उत्तरामिति कौषीतकम् । यां परि अस्तमयमुत्सर्पेत् इति सा स्थितिः । ३।१.

**पौर्णमास्यां** वार्त्रघ्नौ आज्यभागौ- ' अग्निर्वृत्राणि० त्वं सोमाऽसि ' । ३।५.

**पौष्णी ऋक्** 'शुक्रं ते अन्यत्'। प्रवर्ग्ये शकलपरिचयने अभिष्टवार्था। ८।४.

**प्रउगः** अभिजिति, सत्रे। माधुच्छन्दसगार्त्समदौ प्रउगौ संप्रवयेत्। वायव्यां पुरोरुचं शस्त्वा उभे वायव्ये तृचे। ऐन्द्रवायवीं पुरोरुचं शस्त्वा उभे ऐन्द्रवायवे तृचे। अथ पुरोरुचं अथ उभे तृचे। अथ पुरोरुचं अथोभे तृचे इति संप्रवयेत् (इति केचित्, तत्–) नाद्रियेत। माधुच्छन्दसान्येव पूर्वाणि तृचानि करोति, गार्त्समदान्युत्तराणि। माधुच्छन्दसे एव प्रउगे सति गार्त्समदं वैश्वदेवं उपरिष्टान्माधुच्छन्दसस्य पर्याहरेत्। २४।१. अथ माधुच्छन्दसं सारस्वतम्, तस्यैवोत्तमया परिदध्यात्। इत्यैकाहिकं प्रातःसवनं स्यात् इति सा स्थितिः। २४।२.

प्रउगः अभिप्लवषडहे **प्रथमे**ऽहनि ज्योतिषि माधुच्छन्दसः। २०।२. **द्वितीये**ऽहनि गवि गार्त्समदः। २०।३. **तृतीये**ऽहनि आयुषि औष्णिहः वैश्वमनसः। २०।४. **चतुर्थे**ऽहनि गवि मैधातिथः। २१।२. **पञ्चमे**ऽहनि आयुषि संहार्यप्रउगः। २१।३. **षष्ठे**ऽहनि ज्योतिषि संहार्यप्रउगः। २१।४.

प्रउगः अविवाक्ये माधुच्छन्दसः। २७।२.

प्रउगः आज्योक्थम्। गायत्रम्। न पुरोरुचं च सूक्तं चान्तरेण व्याह्वयते। पुरोरुचेपुरोरुचे एवाह्वयते। 'वायुरग्रेगाः, वायवा याहि'। १४।४. वैश्वदेवी पुरोरुक् षट्पदा भवति। तस्यै द्वेद्वे पदे अवग्राहं शंसति। अत्र हैके सारस्वतीं पुरोरुचं शंसन्ति, न तथा कुर्यात्। 'वायवा याहि दर्शत' 'अश्विना यज्वरीरिषः' इत्येते उभे तत् प्रउगं नवर्चं द्वादशर्चं च तदेकविंशतिः। तानि वै सप्त तृचानि भवन्ति। 'विश्वेभिः सोम्यं मधु' इति उक्थं शस्त्वा यजति। अनुवषट् करोति। १४।५.

प्रउगः चतुर्विंशेऽहनि माधुच्छन्दसः। १९।८.

प्रउगः छन्दोमे **प्रथमे**– वायव्यं 'प्र वीरया शुचयो दद्रिरे वाम्'। ऐन्द्रवायवं 'ते सत्येन मनसा दीध्यानाः'। मैत्रावरुणं 'उद्वां चक्षुर्वरुण'। आश्विनं 'आ गोमता नासत्या'। ऐन्द्रं 'आ नो देव शवसा याहि'। वैश्वदेवं 'प्र वो यज्ञेषु देवयन्तो'। सारस्वतं 'प्र क्षोदसा धायसा'। बृहत् पृष्ठं, राथंतरं शस्त्रम्। २६।८. **द्वितीये**। वायव्यं 'कुविदङ्ग नमसा ये वृधासः'। ऐन्द्रवायवं 'यावत्तरस्तन्वो याव'। मैत्रावरुणं 'प्रति वां सूर उदिते'। आश्विनं 'अपः स्वसुरुषसो नग्'। ऐन्द्रं 'अयं सोम इन्द्र तुभ्यम्'। वैश्वदेवं 'प्र ब्रह्माणो अङ्गिरसो'। सारस्वतं 'उत स्या नः सरस्वती'। राथंतरं पृष्ठं, बार्हतं शस्त्रम्। २६।११. **तृतीये**। वायव्यं 'आ वायो भूष शुचिपाः'। ऐन्द्रवायवं (उत्तरः तृचः)। मैत्रावरुणं 'दिवि क्षयन्ता रजसः'। आश्विनं 'आ विश्ववाराऽश्विना'। ऐन्द्रं 'इन्द्रं नरो नेमधिता'। वैश्वदेवं 'ऊर्ध्वो अग्निः सुमतिम्'। सारस्वतं 'प्र क्षोदसा धायसा'। एते उ वा त्रैष्टुभाः वासिष्ठाः प्रउगाः। बृहत् पृष्ठं, राथंतरं शस्त्रम्। २६।१५.

प्रउगः पृष्ठ्ये षडहे **प्रथमे**ऽहनि माधुच्छन्दसः। २२।१. **द्वितीये**ऽहनि गार्त्समदः। २२।२. **तृतीये**ऽहनि औष्णिहः आत्रेयः। २२।३. **चतुर्थे**ऽहनि आनुष्टुभः। २२।७. **पञ्चमे**ऽहनि बार्हतः। २३।१. **षष्ठे**ऽहनि आतिच्छन्दसः। २३।६.

प्रउगः महाव्रते त्रैष्टुभः। वायव्यं 'कुविदङ्ग नमसा'। ऐन्द्रवायवं 'यावत्तरस्तन्वो याव'। मैत्रावरुणं 'उद्वां चक्षुर्वरुण'। आश्विनं 'क उ श्रवत् कतमो'। ऐन्द्रं 'कथा महामवृधत्'। वैश्वदेवं 'को वस्त्राता वसवः'। सारस्वतं 'उत स्या नः सरस्वती'। एष त्रैष्टुभः तृचक्लृप्तः वामदेव्यः प्रउगः। तदाहुः न त्रैष्टुभं प्रातःसवनं स्यात्। ऐकाहिकमेव स्यात्। कौआ. १।२.

प्रउगः विश्वजिति। सत्रे। माधुच्छन्दसः। २५।११.

प्रउगः विषुवति अहनि। सत्रे। त्रैष्टुभः वासिष्ठः। वायव्यं 'कुविदङ्ग नमसा'। ऐन्द्रवायवं अत एवोत्तरं तृचं 'यावत्तरस्तन्वो'। मैत्रावरुणं 'उद्वां चक्षुर्वरुण'। आश्विनं 'आ गोमता नासत्या'। ऐन्द्रं 'आ नो देव शवसा'। वैश्वदेवं 'प्र ब्रह्मैतु सदना'। सारस्वतम् 'उत स्या नः सरस्वती'। तदाहुः न त्रैष्टुभं प्रातःसवनं स्यात्। (किन्तु) ऐकाहिकमेव स्यात्, माधुच्छन्दसः प्रउगः। २५।१–३.

प्रउगः स्वरसामनि प्रथमे माधुच्छन्दसः। द्वितीये गार्त्समदः। तृतीये आत्रेयः औष्णिहः। २४।५. (ये त्र्यहस्य प्रथमस्य, ते प्रउगाः। शाङ्खाश्रौ. ११।१।१).

**प्रउगे** बह्व्यो देवताः शस्यन्ते । २८।९.

**प्रगाथः** इन्द्रनिहवः मरुत्वतीयशस्त्रे अग्निष्टोमे 'इन्द्र नेदीय एदिहि'। पुनरादाय ककुप्कारं शस्यते सामगानुसारात् । प्र नूनं ब्रह्मणस्पतिः इति ब्राह्मणस्पत्यः । १५।२.

**प्रजातिकामस्य** सार्वसेनियज्ञः । ४।६.

**प्रणवः** । शुद्धः प्रणवः स्यात् प्रजाकामानाम् । मकारान्तः प्रतिष्ठाकामानाम् । मकारान्तः प्रणवः स्यादिति हैक आहुः । शुद्ध एव स्थितो मीमांसितः प्रणवः । शुद्ध एव प्रणवः स्यात् शस्त्रानुवचनयोर्मध्ये इति ह स्माह कौषीतकिः । मकारान्तः अवसानार्थे । ११।५.

**प्रणेजनं यूपस्य** अग्निष्टोमे । अथैनं प्रणेनिजति । अद्भिः प्रक्षालयन्ति । १०।१.

**प्रतिगरः** । अग्निष्टोमे तृतीयसवने आग्निमारुते स्वादुष्किलीयासु अध्वर्युः मद्वत् प्रतिगृणाति । १६।८.

प्रतिगरः । माध्यंदिने मरुत्वतीयशस्त्रे 'जनिष्ठा उग्रः सहसे तुराय' इति सूक्तस्य प्रथमायामृचि सकृत् अध्वर्युः मद्वत् प्रतिगृणाति । १५।३.

प्रतिगरः । वैश्वदेवशस्त्रे द्यावापृथिवीये सूक्ते अध्वर्युः मद्वत् प्रतिगृणाति अग्निष्टोमे । १६।३. 'मदामो दैव' इति मद्वान् प्रतिगरः ( शांश्रौभाष्य. ७।१९।१६ ).

प्रतिगरः 'शोंसामो दैव' इत्यध्वर्युः प्रातःसवने माध्यंदिने च । 'शोशोंसामो दैव' इति तृतीयसवने । १४।३.

**प्रतिहर्ता** प्रतिहरति । १७।७.

**प्रतिहारः** । अतिरात्रे उत्तमात् प्रतिहारादूर्ध्वं आहूय साम्ना शस्त्रमुपसंतन्वन्ति । १७।६.

**प्रतीराधान्** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।७.

**प्रत्युपहवः** अच्छावाकस्य 'प्रत्येता वामा सूक्ताऽयं सुन्वन् यजमानो गाव उपहूताः' इति । यदि नोपजुहूषति उतोपहूत इत्यभ्यस्यति । यद्युपजुहूषते प्रत्युपहूतोऽच्छावाको 'नि वर्तध्वं माऽनु गात' इति अस्य सूक्तस्य यावतीः पर्याप्नुयात् तावतीरनुद्रवेत् । होता वा प्रतिकामिनमच्छावाकम् । सा तत्र प्रायश्चित्तिः । १३।८.

**प्रथमयज्ञे** न प्रवृञ्ज्यात् । कामं तु योऽनूचानः श्रोत्रियः स्यात्, तस्य प्रवृञ्ज्यात् । ८।३.

**प्रधानं** दर्शपूर्णमासयोः । अग्निं प्रथमं यजति । अथ पौर्णमास्यां अग्नीषोमौ यजति । तौ वा उपांशु निरुक्तौ भवतः । अथ अमावास्यायां इन्द्राग्नी यजति । संनयन् अमावास्यायां इन्द्रं यजति । असंनयन् पुरोळाशावन्तरेण उपांशु यजति । संनयन् सांनाय्यस्यान्तरेण उपांशु आज्यस्य यजति । अग्निं स्विष्टकृतमन्ततो यजति । तस्य सच्छन्दसौ याज्यापुरोनुवाक्ये । वषट्कृत्य अप उपस्पृशति । ३।६.

**प्रपदो जपति** प्रातरनुवाकात् प्राक् । ११।१. ( शांश्रौ. ६।२–३. )

**प्रमादे** जाते । कश्चित् शस्त्रे वा अनुवचने वा प्रमत्त उपहन्यात् विचिकित्सा वा स्यात्, उपहतं अबद्धं अतिक्रान्तं मन्यमानः मनसा वृत्तान्तमीक्षमाणः विनिवृत्य उपहतमनुपहतं कृत्वा, आनन्तर्यात् प्रयोगः स्यात् वृत्तान्ताद् ( वा ) इति मीमांसन्ते । न आनन्तर्यात् इति पैङ्ग्यः ( आदित आरभ्य प्रयोगो न कार्यः ) । आनन्तर्यात् इति कौषीतकिः । २६।३. यदि ऊर्ध्वं परिधानात् प्रणववषट्कारयोर्वा ऊर्ध्वं याज्यापुरोनुवाक्ययोर्बुद्ध्येत । अतिक्रान्तमुल्बणं एतस्यां वेलायां भवतीति ह स्माह प्रागहिः । नैतस्यां वेलायां अतिक्रान्तमुल्बणं सदस्यो बोधयेत् इति ह स्माह पैङ्ग्यः । कृतस्यानावृत्तिः इति ह स्माह आरुणिः । गुणलोप इति श्वेतकेतुः । २६।४. यदि अतिक्रान्तमुल्बणं कर्ता वा स्वयं बुद्ध्येत अन्यो वा बोधयेत कथं वा तत् उल्बणं अनुल्बणं भवेत् पुनर्वचनेन वा मन्त्रस्य, होमेन वेति । पुनर्वाच्यो मन्त्र इति ह स्माह जातूकर्ण्यः ( स्थविरः ) । यावन्मात्रमुल्बणं, तावद् ब्रूयात् ऋचं अर्धर्चं वा पादं वा पदं वा वर्णं वेति ह स्माह जातूकर्ण्यः । अथ ह स्माह कौषीतकिः न मन्त्रं पुनर्ब्रूयात् । नाहुतिं जुहुयात् । ये हि होतारो यज्ञस्य किञ्चित् तदुल्बणं अबुध्यमानाः कुर्वन्ति, सर्वं तदग्निर्देवो होता अनुल्बणं करोति । तदेतदृचाऽभ्युदितं 'यत् पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते'। इति । २६।५–६.

**प्रयाजाः** अवभृथे । चतुरः प्रयाजान् यजति ऋतेबर्हिष्कान्, बर्हिष्मन्तमुत्सृजति । १८।१०.

प्रयाजाः नव वरुणप्रघासेषु । ५।३. वैश्वदेवपर्वणि । ५।१. शुनासीर्ये । ५।८. साकमेधेषु । ५।५.

प्रयाजाः पितृयज्ञे, बर्हिष्मन्तमुत्सृजति । ५।७.

**प्रयाजानुयाजा** आग्नेयाः । १।२.

**प्रयाजानुयाजेषु** विभक्तयः पुनराधेये । यथायथं उत्तमौ प्रयाजानुयाजौ । १।४.

**प्रयाजान् यजति** । समिधो यजति, तनूनपातं यजति, इळो यजति, बर्हिर्यजति, स्वाहाकृतिमन्ततो यजति । चतुर्थे प्रयाजे समानयति ( आज्यं, उपभृतः जुह्वाम् ) । उत्तमे प्रयाजे देवताः समावपति । नात्र 'अग्निं होत्रात्' इत्याह । 'स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु' इति हैक आहुः ( आश्वला० ) । न तथा कुर्यात् 'स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य हविषो व्यन्तु' इत्येव ब्रूयात् । दर्शपूर्ण० । ३।४.

**प्रवती ऋक्** ब्राह्मणस्पत्या 'प्रैतु ब्रह्मणस्पतिः' । प्रवर्ग्ये । ८।७.

**प्रवर्ग्यः** अग्निष्टोमे । ८।३-७. तं ( प्रवर्ग्यं ) न प्रथमयज्ञे प्रवृञ्ज्यात् । कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् । तं एकशतेन अभिष्टुयात् । अनचानम् । उच्चैः निरुक्तम् । सावित्रीः प्रथमामभिष्टौति । ८।३. ब्रह्म जज्ञानं प्रथमं पुरस्तात्, अञ्जन्ति यं प्रथयन्तो न विप्राः ( अक्तवती ), सं सीदस्व महाँ असि ( संनवती ), " भवा नो अग्ने सुमना उपेतौ, तपो ष्वग्ने अन्तराँ अमित्रान्, यो नः सनुत्यो अभिदासदग्ने " इति तिस्रस्तपस्वतीः । 'कृणुष्व पाजः प्रसितिं न पृथ्वीम्' इति राक्षोघ्नीः पञ्च । अध्वर्युः प्रादेशानभिमिमीते । 'परि त्वा गिर्वणो गिरः, अधि द्वयोरदधा उक्थ्यं वचः' इत्यैन्द्यौ । अध्वर्युः शकलान् परिचिनोति । 'शुक्रं ते अन्यद्यजतं ते अन्यत् ( पौष्णी ), अर्हन् बिभर्षि सायकानि धन्वा ( रौद्री )' । अध्वर्युः सुवर्णरजतौ हिरण्यशकलौ करोति । 'पतङ्गमक्तमसुरस्य मायया' । (तृचम्) एतस्यायतने प्रजाकामस्य- ' अपश्यं त्वा मनसा चेकितानम् ' इत्यभिष्टुयात् । ८।४. 'स्रक्वे द्रप्सस्य' सर्वम् ( ९ ) पवित्रं ते विततं द्वे । वियत्पवित्रं धिषणा । ता द्वादश पावमान्यः । अयं वेनश्चोदयत् ( ८ ), तस्य एका 'नाके सुपर्णे' इति उत्सृजति, तामुत्तरासु करोति । पापोक्तस्य पावमानीभिरभिष्टुयात् । गणानां त्वा गणपतिम् ( सूक्तं १९ । तत्र अन्तिमपादे- ) बृहद्वदेम विदथे सुवीराः इति वीरकामायै वीरं ध्यायात्, लभते ह वीरम् । काराधद्धोत्राऽश्विना ( नव ), आ नो विश्वाभिरूतिभिः आनुष्टुभं तृचम् । एतस्यायतने प्रजाकामस्य विष्णुर्योनिं कल्पयतु इत्यभिष्टुयात् । ८।५. 'प्रातर्यावाणा प्रथमाः' इति पूर्वाह्णे सूक्तम् । 'आ भात्यग्निरुषसामनीकम्' इत्यपराह्णे । एते त्रैष्टुभे पञ्चर्चे । ईळे द्यावापृथिवी इति जागतं पञ्चविंशम् । 'रुचितो घर्मः' इत्युक्ते 'अरूरुचदुषसः' रुचितवती । द्युभिरक्तुभिः परिपात इति परिदधाति परिवत्या । ता एकशतमृचो भवन्ति । अप उपस्पृशति । अवकाशैरुपतिष्ठते । अप उपस्पृशति । त्रयस्त्रिंशदुत्तराः ( उपह्वये इत्यादि ) । ८।६. 'आ सुते सिञ्चत श्रियम्, आ नूनमश्विनोर्ऋषिः' इत्यासिक्तवत्यौ, उदु ष्य देवः सविता इति उद्यम्यमाने उद्यतवती । प्रैतु ब्रह्मणस्पतिः इति प्रव्रजत्सु प्रवतीं ब्राह्मणस्पत्याम् । नाके सुपर्णमुप यत् पतन्तं इति व्रजत्सु । ( उभा पिबतं, तप्तो वां इति ) द्वाभ्यां यजते त्रिष्टुब्वतीभ्यां पूर्वाह्णे, ( 'उभा पिबतं, उदुस्रिया' इति ) जगद्वतीभ्यामपराह्णे । विपर्यस्यति । दाशतयीभ्यां वषट् कुर्यात् इति हैके, यथाऽऽम्नातमिति त्वेव स्थितम् । उत्तरा अभिष्टौति । हविर्हविष्मो महि इति पुरा आहुतेः प्रापणात् । सूयवसाद् भगवती इत्याशीर्वत्या परिदधाति । सुते प्रवर्ग्यः इत्याचक्षते ( उपसत्सु प्रवर्ग्यः प्रागुक्तः ) स्तुते बहिष्पवमाने । एतस्मिन् काले ( अत्र पक्षे ) आग्नीध्रीये प्रवृञ्ज्युः । यथा उपसत्सु एवमेवात्र । सुत्यायामनवानमेवोपचारः । स एष महावीरो मध्यंदिनोत्सर्गः । ८।७.

**प्रवर्तमानाभ्यां** हविर्धानाभ्यामन्वाह, 'प्रेतां यज्ञस्य शंभुवा' इति । ९।२.

**प्रवह्लिकाः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।७.

**प्रवासे** । प्रवत्स्यंश्च प्रोषितवाँश्च अग्नीनुपतिष्ठते । २।५.

**प्रवृत्तहोमीये** आहुती जुहोति अतिरात्रे आश्विनशस्त्रोत्तरं संसन्नेषु छन्दोगेषु । १८।५.

**प्रशुक्रीयं** सूक्तं पुरस्तादानोभद्रीयस्य ' प्र शुक्रैतु देवी मनीषा ' २७।२. ( शाङ्खाश्रौ. १०।५।२३ ).

**प्रस्तोता** प्रस्तौति । १७।७.

प्रस्तोता ब्रह्माणमामन्त्रयते ' ब्रह्मन् स्तोष्यामः प्रशास्तः ' इति । १७।७.

**प्रस्थितयाज्याः प्रातःसवने** । ' इदं ते सोम्यं मधु ' इति ( होतुः ) प्रस्थितानां याज्या । अनुवषट् करोति । अथ होत्राः संयजन्ति । १३।६. ' मित्रं वयं हवामहे ' इति मैत्रावरुणः । ' इन्द्र त्वा वृषभं वयं ' इति ब्राह्मणाच्छंसी । ' मरुतो यस्य हि क्षये ' इति पोता । ' अग्ने पत्नीरिहा- वह ' इति नेष्टा । 'उक्षान्नाय वशाऽन्नाय' इति आग्नीध्रः । अनुवषट् कुर्वन्ति । २८।३. शांश्रौ ७।४. **माध्यंदिने**– वासिष्ठीर्मध्यंदिने उन्नीयमानेभ्योऽन्वाह । ऐन्द्रयस्त्रिष्टुभो भवन्ति । अथ होत्राः संयजन्ति । अनुवषट् कुर्वन्ति । २९।२. ' पिबा सोममभि यः ' इति होता यजति । ' य ईं पाहि यः ' इति मैत्रावरुणः । ' एवा पाहि प्रत्नथाः ' इति ब्राह्मणाच्छंसी । ' अर्वाङेहि ' इति पोता । ' तवायं सोमः ' इति नेष्टा । 'इन्द्राय सोमाः प्र दिवः ' इति अच्छावाकः । ' आपूर्णो अस्य ' इति आग्नीध्रः । शांश्रौ. ७।१७. **तृतीयसवने**– ऐन्द्रयार्भव्यास्तृतीयसवने प्रस्थि- तानां यजति , जगत्या । अथ होत्राः संयजन्ति ( अनुवषट् कुर्वन्ति ) । १६।१,३०।१. ' इन्द्र ऋभुभिर्वाजवद्भिः ' इति होता यजति । ' इन्द्रावरुणा सुतपौ ' इति मैत्रावरुणः । ' इन्द्रश्च सोमं पिबतं ' इति ब्राह्मणाच्छंसी । ' आ वो वहन्तु सप्तयः ' इति पोता । ' अमेव नः सुहवा ' इति नेष्टा । ' इन्द्राविष्णू पिबतं मध्वः ' इति अच्छावाकः । ' इमं स्तोममर्हते ' इति आग्नीध्रः । शांश्रौ. ८।२.

**प्रस्थितेषु** सर्वेषु द्विदेवत्येषु च पुरोऽनुवाक्या भवन्ति । ३०।११.

**प्रहस्तकं** शंसति निष्केवल्ये महाव्रते । ता वै तिस्र ऋचो भवन्ति । अतिच्छन्दाः प्रथमा । दक्षिणतः पक्षो राथंतरः, उत्तरतः पक्षो बार्हतः । एतौ पक्षौ चतुर्विंशौ । कौआ. २।५.

**प्राची दिक्** । सा वै प्राची दिक्, यस्यां देवताः । १८।१०.

**प्राजापत्यः पशुः** उपांशु भवति । २५।१०.

प्राजापत्यः पशुः सत्रादौ । संनिवपनीयामिष्टिं कृत्वा प्राजापत्येन पशुना यजन्ते । तस्य हैके वायव्यं पशुपुरो- डाशं कुर्वन्ति, अग्नये उ हैके कामाय कुर्वन्ति । तस्य हैके वैश्वानरीयं पशुपुरोडाशं कुर्वन्ति । १९।२.

**प्राणोपासनम्** । तस्य अन्नं आपश्च । कौआ. ९।१–७.

प्राणोपासनम् । प्राणः इन्द्रियेषु श्रेष्ठः । निःश्रेयसादानं नाम । कौआ. ४।१४.

**प्राणो** ब्रह्म इति साङ्गमुपासनं कौषीतकिमतेन । कौआ. ४।१. पैङ्ग्यमतेन । ४।२.

प्राणो वंश इति ध्यानम् । अनुव्याहाराः नाम । कौआ. ७।९–१०, ८।१.

प्राणोऽसि प्रज्ञात्मा । प्रतर्दनो दैवोदासिः । स मे आत्मा इति विद्यात् । ( प्राणः क्रियाशक्तिः, प्रज्ञा चैतन्यम् । ) कौआ. ५।१–८.

**प्रातःसवनं** गायत्री वहति । १२।३.

प्रातःसवनं वसूनाम् । १६।१, ३०।१.

**प्रातःसवने** ( उन्नीयमानेषु ) अनवानं यजेयुः इति पैङ्ग्यः । अर्धर्चशः इति कौषीतकिः । २८।७.

प्रातःसवने नव चमसानुन्नयन्ति । २८।२.

प्रातःसवने प्रतिगरः ' शोंसामो दैव ' इति । १४।३.

प्रातःसवने मैत्रावरुणश्च अच्छावाकश्च द्विदेवत्याः शंसतः । २८।९.

प्रातःसवने वपया ( सवनीयपशोः ) चरन्ति । १२।६.

प्रातःसवने शस्त्रजपः होतुः ' उक्थमवाचि ' उपांशु । उक्थशाः इत्यध्वर्युः । १४।३.

प्रातःसवने ' शोंसावो३ ' इत्याहावः मकाररहितः । १४।३.

प्रातःसवने सावित्रग्रहेण चरन्ति । तं माध्यंदिने । तृतीयसवने सवितारं यजति । १६।२.

प्रातःसवने सूक्तस्य पुरस्तात् निवित् धीयते । १४।१.

**प्रातरनुवाकः** । प्रपदो जपति, आहुतीर्जुहोति । हिंकृत्य प्रातरनुवाकमन्वाह । उच्चैर्निरुक्तमनुब्रूयात् । अर्धर्चशः अनुब्रूयात् । ११।१. आग्नेयं क्रतुमन्वाह, उषस्यमन्वाह, आश्विनमन्वाह । गायत्रीमन्वाह, अनुष्टुभमन्वाह, त्रिष्टुभमन्वाह, बृहतीमन्वाह, उष्णिहमन्वाह, जगतीमन्वाह । ११।२. पङ्क्तिमन्वाह । ११।३. अनिरुक्तया आपो रेवतीः इति प्रतिपद्यते । उपप्रयन्तो अध्वरं इत्युपसंदधाति । समानेन सूक्तेन समारोहेत्, यत्र वा समानस्य आर्षेयः स्यात् । तत् ( सूक्तं ) अनवानं संक्रामेत् । ११।४. प्रणवः शुद्ध एव स्यात् शस्त्रानुवचनयोर्मध्ये, मकारान्तः अवसानार्थे । समानोदर्काणि उत्तमानि क्रतूनां पाङ्क्तानि अन्वाह ।११।५. अभूदुषा रुशत्पशुः इति परिदधाति, तस्यां वाचमृत्सृजति । ( न प्रातरनुवाकं च उपांश्वन्तर्यामौ चान्तरेण वाचं विसृजेत । ११।८. ) 'या वाजं देवहितं सनेम' इति द्विपदामभ्यस्यति । त्रिःसप्तानि क्रतूनां छन्दांस्यन्वाह । ११।६. ऋग्भिर्हि शतमात्रमनुब्रूयात्, विंशतिशतमनुब्रूयात्, त्रीणि षष्टिशतानि अनुब्रूयात्, सप्त विंशतिशतानि अनुब्रूयात्, सहस्रमनुब्रूयात् । प्रातरनुवाकः अपरिमितः इत्येषा हैव स्थितिः । ( अथो त्रीणि वा एतानि सहस्राणि अधियज्ञं प्रातरनुवाकमाश्विनं महदुक्थम् ) । ११।७. हविर्धानयोः प्रातरनुवाकमन्वाह । महारात्रमुपाकुर्यात् पुरा वाचो विसर्गात् यत्रैतत् पशवो मनुष्या वयांसि इति वाचं व्यालभन्ते पुरा ततः । तद्धैके छन्दसां योगे इति जपित्वा अथ आपो रेवतीः इति प्रतिपद्यन्ते ( परन्तु ) नापो रेवत्यै पुरस्तात् किंच परिहरेत् इति तदिह स्थितम् । ११।८.

प्रातरनुवाकः विषुवति अहनि । 'अग्निं मन्ये पितरमग्निमापिम्' इत्येतया प्रतिपद्यते । आह कौषीतकिः यथायथमेव तं ( प्रातरनुवाकं ) उपाकुर्यात् ( अन्ये तु सूर्योदयोत्तरमुपाकुर्यादित्याहुः ) । २५।१०.

**प्रायणीया** उपांशुहविः शंय्वन्ता । ८।२.

**प्रायणीयोदयनीये** । अग्निष्टोमे । य एव प्रायणीयस्य ऋत्विजः ते उदयनीयस्य स्युः । ७।५. शंय्वन्तं प्रायणीयं शंय्वन्तमुदयनीयम् । ७।७. अग्निं प्राक् यजति, सोमं दक्षिणा, सवितारं प्रतीचीं, पथ्यां स्वस्तिमुदीचीं, अदितिं ऊर्ध्वायां दिशि ( मध्ये इत्यर्थः ) । ७।६. पथ्यां स्वस्तिं प्रथमां प्रायणीये यजति, अथाग्निम्, अथ सोमम्, अथ सवितारम्, अथादितिम् । अग्निं प्रथममुदयनीये यजति, अथ सोमम्, अथ सवितारम्, अथ पथ्यां स्वस्तिम्, अथादितिम् । ७।७. याः प्रायणीयायां पुरोऽनुवाक्याः, ता उदयनीयायां याज्याः करोति, या याज्यास्ताः पुरोऽनुवाक्याः । ७।८. संयाज्ये 'त्वां चित्रश्रवस्तम० यद् वाहिष्ठं तदग्नये' इत्यनुष्टुभौ । नैते विपर्यस्यति । ७।९.

**प्रेङ्खं** महाव्रते । निष्केवल्यशस्त्रयाज्यायामुक्तायां अननुवषट्कृते एव प्रेङ्खं ग्रथ्नन्ति । प्राङुपावरोहति, प्रत्यङ् प्रेङ्खफलकं अपोहति । कौआ. २।१७.

प्रेङ्खफलकमुपनिधाय त्रिरभ्यान्य त्रिरभ्यवानिति महाव्रते । कौआ. १।६. तद्वा उ औदुम्बरं भवति, अथैनत् उरसा संस्पृश्य दक्षिणं भागमात्मनः अतिहरन् जपति 'अर्कोऽसि वसवस्त्वा०' । अथोत्तरं भागमात्मनः अतिहरन् जपति 'रुद्रास्त्वा०' । अथ दक्षिणं भागमात्मनः अतिहरन् जपति 'आदित्यास्त्वा०' । अथोत्तरं भागमात्मनः अतिहरन् जपति 'विश्वे त्वा देवाः०' । अथ समधिसृप्य प्राञ्चौ पादौ उपावहत्य भूमौ प्रतिष्ठापयति । अथोपरि प्रेङ्खफलके दक्षिणोत्तरिणं उपस्थं कृत्वा दक्षिणेन प्रादेशेन पश्चात् प्राङ् प्रेङ्खफलकमुपस्पृशति 'प्रजापतिस्त्वा०' । अथ प्राञ्चौ पाणी परिगृह्य जपति । १।७. 'सं वाक् प्राणेन०' । कौआ. १।८.

**प्रैषः** आश्विनोक्थग्रहस्य तिरोअह्न्यवान् । ३०।११.

**फाल्गुन्यां** पौर्णमास्यां अदीक्षितायनानि प्रयुज्यन्ते । ४।४.

**बहिष्पवमाने** स्तुते प्रवर्ग्यः इत्येकः पक्षः । सुत्यायामनवानमेवोपचारः, एतस्मिन् काले आग्नीध्रीये प्रवृञ्ज्युः । ८।७.

**बालाकिः गार्ग्यः**, अजातशत्रुः काश्यः । य एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म, स वै वेदितव्यः । कौआ. ६।१-२०.

**बैल्वं यूपं** अन्नाद्यकामः कुर्वीत । १०।१.

**ब्रह्मज्ञानचर्चा** । श्रवणादिविधिः, ज्ञानसाधनानि, शमादिपञ्चकम्, नेति नेति, इदं सर्वं यदयमात्मा, तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म । विद्यामाहात्म्यम् । कौआ. १३-१४.

**ब्रह्मत्वम्** । ६।१०-१४. तदाहुः किंविदं किंछन्दसं ब्रह्माणं वृणीतेति, अध्वर्युमित्येके, छन्दोगमित्येके, बह्वृचमिति त्वेव स्थितम् । यावदृचा यजुषा साम्ना कुर्युः, तूष्णीं तावत् ब्रह्मा आसीत । ६।११. यत्रैनं ब्रूयुः ब्रह्मन् प्रणेष्यामः, ब्रह्मन् प्रचरिष्यामः, ब्रह्मन् प्रस्थास्यामः, ब्रह्मन् स्तोष्यामः इति, ॐ इत्येतावता प्रसूयात् । यद्वि ऋचि उल्बणं स्यात् चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये प्रायश्चित्ताहुतिं जुहुयात् भूः स्वाहेति । यदि यजुषि उल्बणं स्यात् चतुर्गृहीतमाज्यं गृहीत्वा अन्वाहार्यपचने प्रायश्चित्तं जुहुयात् हविर्यज्ञे, आग्नीध्रीये सौम्येऽध्वरे, भुवः स्वाहेति । यदि साम्नि उल्बणं स्यात् चतुर्गृहीतमाज्यं गृहीत्वा आहवनीये जुहुयात् स्वः स्वाहेति । यदि अविज्ञातमुल्बणं स्यात् ... आहवनीये जुहुयात् भूर्भुवःस्वः स्वाहेति । ६।१२. ब्रह्मसदनात् तृणं निरस्यति । उपविशति 'इदमहमर्वावसोः सदसि सीदामि' इति । उपविश्य जपति 'बृहस्पतिर्ब्रह्मा०' इति । प्रणीतासु प्रणीयमानासु वाचं यच्छति आ हविष्कृत उद्वासनात् । इष्टे च स्विष्टकृति आ अनुयाजानां प्रसवात् । ६।१३. तत् (प्राशित्रहरणं) प्रतीक्षते, 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इति । प्रतिगृह्णाति 'देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामि' इति । व्युह्य तृणानि प्राग्दण्डं स्थण्डिले निदधाति 'पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे' इति । तत आदाय प्राश्नाति 'अग्नेष्ट्वास्येन प्राश्नामि' इति । अपोऽन्वाचामति 'शान्तिरसि' इति । प्राणान् संमृशति । नाभिमन्ततोऽभिमृशति 'इन्द्रस्य त्वा जठरे सादयामि' इति । सावित्रेण जपेन प्रसौति । ६।१४.

**ब्रह्मलोकवर्णनम्** । कौआ. ३।३.

**ब्रह्मवर्चसकामः** पालाशं यूपं कुर्वीत । १०।१.

**ब्रह्मवर्चसकामस्य** ज्वलन्त्यां समिधि अग्निहोत्रं जुहुयात् । २।२.

**ब्रह्मा** स्तोत्रमनुमन्यते । १७।७.

**ब्राह्मणस्पत्यं सूक्तम्** 'गणानां त्वा०' । ८।५.

**ब्राह्मणस्पत्या** प्रवती ऋक् 'प्रैतु ब्रह्मणस्पतिः' । प्रवृजत्सु प्रवर्ग्ये । ८।७.

**ब्राह्मणाच्छंसिनः** भारद्वाजः अहरहः पर्यासो भवति । ३०।९.

**ब्राह्मणाच्छंसिने** उष्णिक्षु प्रणयन्ति । ३०।३.

ब्राह्मणाच्छंसिने गायत्रीषु प्रणयन्ति द्वितीयेऽहन् । 'प्र मंहिष्ठाय बृहते बृहद्रये' इति षडृचं द्विस्तावत् यावन्मैत्रावरुणस्य कार्ष्णः अहरहः पर्यासो भवति । ३०।९.

ब्राह्मणाच्छंसिने गायत्रीषु प्रणयन्ति षष्ठेऽहन् । 'उदु ब्रह्माण्यैरत श्रवस्या' इत्यहरहः पर्यासः । ताः षड् भवन्ति । नौधसं ब्राह्मणाच्छंसिनः पृष्ठम् । २९।६.

**ब्राह्मणाच्छंसी** 'इन्द्र त्वा वृषभं वयम्' इत्यैन्द्या यजति । प्रातःसवने प्रस्थितयाज्या । २८।३. ('एवा पाहि प्रत्नथा' इति माध्यंदिने । शांश्रौ. ७।१७. 'इन्द्रश्च सोमं' इति तृतीयसवने । शांश्रौ. ८।२ ) ।

ब्राह्मणाच्छंसी चतुर्विंशे चत्वारिंशतं शंसति । प्रथमे छन्दोमे चत्वारि सूक्तानि शंसति, पञ्चपञ्च उत्तरयोः । ३०।१०.

ब्राह्मणाच्छंसी च मैत्रावरुणश्च द्विपर्यासौ । ३०।९.

ब्राह्मणाच्छंसी प्रातःसवने माध्यंदिने च एकदेवत्याः शंसति । तृतीयसवने द्विदेवत्याः शंसति । भूयिष्ठाः शंसति । २८।९. ब्राह्मणाच्छंसी विश्वामित्रस्य च वसिष्ठस्य च शंसति । वासिष्ठः पर्यासः । नौधसं पृष्ठं भवति निधनवत् । वैश्वामित्रं उक्थमुखं भवति । इदं प्रायणीयोदयनीययोः एकाहे च । २९।३.

ब्राह्मणाच्छंसी षष्ठेऽहन् सुकीर्तिं शंसति । अथ वृषाकपिं पङ्क्तिशंसम्, न्यूङ्खं शंसति, कुन्तापं यथाछन्दसं शंसति । नाराशंसीः, रैभीः, कारव्याः, इन्द्रगाथाः, भूतेछदः, पारिक्षितीः, ऐतशप्रलापम् इति शंसति । ३०।५. आदित्याङ्गिरसीरुपशंसति । अश्वः श्वेतो दक्षिणा । ३०।६. दिशांकॢप्तीः शंसति । जनकल्पाः शंसति, प्रवह्लिकाः, प्रतीराधान्, अतीवादान्, आहनस्याः शंसति ता वा अष्टौ भवन्ति । कपृन्नरः कपृथमुद्दधातन, यद्ध

प्राचीरजगन्तन इति द्वे शंसति । ३०।७. दाधिक्रीं शंसति, पावमानीः शंसति । ३०।८.

**भक्षः** । द्विदेवत्यानां प्रथमो भक्षः अथेळा अथ होतृचमसः । तानध्वर्यवे प्रयच्छति नानुसृजति । द्विरैन्द्रवायवस्य भक्षयति, द्विर्हि तस्य वषट् करोति । सकृन्मैत्रावरुणस्य, सकृदाश्विनस्य । सर्वतः परिहारमाश्विनस्य भक्षयति । संस्रवान् होतृचमसे अवनयति । १३।६.

**भक्षे** दधि आनयति, न व्रते सम्राजः । ८।९.

**भूतेछ्दः** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**भूतेछन्दांसि ( छदांसि )** नाम साम महाव्रते । कौआ. १।४.

**मणिधारणप्रयोगः** । तत्र मन्त्राः । कौआ. १२।१-७. ( १ ) हस्तिदन्तमणिः ( २ ) हृदयशूलाग्रमणिः ( ३ ) प्रतोदाग्रमणिः (४) मुशलाग्रमणिः (५) खदिरसारमणिः (६) ऐरण्डमणिः (७) बैल्वमणिः (८) महावराहस्य उदोहः इति । १२।८.

**मरणसूचकाः स्वप्नाः** । पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति । वराह एनं हन्ति । मर्कट एनं हन्ति । बिसानि खादयति । सुवर्णं भक्षयित्वा अवगिरति । एकपौण्डरीकं धारयति । गां सवत्सां दक्षिणामुखो नलदमाली व्राजयति । स य एतेषां किञ्चित् पश्येत्, पाण्डुरदर्शनां कालीं स्त्रीं मुक्तकेशां, मुण्डान्, तैलाभ्यङ्गः, कौसुम्भपरिधानं, गीतानि, उष्ट्रारोहणं, दक्षिणाशागमनादीनि वीक्ष्य ( न चिरमिव जीविष्यतीति विद्यात् ) । कौआ. ११।४.

**मरणसूचकानि** प्रत्यक्षाणि । (१) चन्द्र इवादित्यो दृश्यते, न रश्मयः प्रादुर्भवन्ति, (२) द्यौर्लोहिनी यथा मञ्जिष्ठा, (३) पायुः व्यस्तं ( न संकोचयितुं शक्नोति ), (४) आदर्शे उदके वा जिह्मशिरसं अशिरसं वा आत्मानं पश्येत्, न वा पश्येत्, ( ५ ) छाया सच्छिद्रा भवति, नैव वा भवति, (६) आदित्यः सच्छिद्रः, (७) अग्निर्नीलः यथा मयूरग्रीवा, (८) महामेघे मरीचीः पश्येत्, ( ९ ) अनभ्रे विद्युतः, (१०) अभ्रे विद्युतं न पश्येत्, (११) अक्षिणी अपिधाय बटरकाणीव न पश्येत्, (१२) कर्णौ अपिधाय आन्तरं शब्दं न शृणुयात्, (१३) कनीनिके विपर्यस्ते । तदा न चिरमिव जीविष्यति इति विद्यात् । तदा यत् मुमूर्षुणा कर्तव्यं, तत् कुर्यात् जपादि । कौआ. ८।७, ११।३.

**मरणे** अशुभसूचकैः प्रत्यक्षैः स्वप्नैर्वा ज्ञाते आयुष्यकामस्य होमाः । कौआ. । ११।४-८.

**मरुत्वतीयं** अग्निष्टोमे । तत् षड्विधं, अनुष्टुभं गायत्रीं बृहतीं उष्णिहं त्रिष्टुभं जगतीं इति षट् छन्दांसि शंसति । पवमानोक्थमिदम् । प्रतिपत्— ' आ त्वा रथं यथोतये ' अनुष्टुप् । अत्र पदविग्रहः । अनुचरः— ' इदं वसो सुतमन्धः ' । इन्द्रनिहवः प्रगाथः— इन्द्र नेदीय एदिहि । प्रगाथः ब्राह्मणस्पत्यः— प्र नूनं ब्रह्मण, एतौ पुनरादायं ककुप्कारं शस्येते सामगानुसारात् । धाय्याः— अग्निर्नेता भग इव, त्वं सोम क्रतुभिः । १५।२. पिन्वन्त्यपो मरुतः जगती । सूक्तं—जनिष्ठा उग्रः सहसे । तस्य प्रथमायां अध्वर्युः सकृत् मद्वत् प्रतिगृणाति । तस्य मध्ये निविदं दधाति । तासामेकैकं पदं अवग्राहं शंसति । उत्तमेन प्रणौति । एना आरतं शंसेत् अत्वरमाणः । याज्या— ये त्वाऽहिहत्ये मघवन् इति ऐन्द्री त्रिष्टुप् । अनुवषट् करोति । १५।३. ( त्रयो हि मरुत्वतीया ग्रहाः ) ।

मरुत्वतीयं अभिजिति । सत्रे । ' आ त्वा रथं यथोतये ' इति प्रतिपत् । ' इदं वसो सुतमन्धः' इत्यनुचरः । एष एव नित्य एकाहातानः । ' जनिष्ठा उग्रः सहसे तुराय ' इति गौरिवीतीयं पूर्वं शस्त्वा ' इन्द्र पिब तुभ्यं सुतो मदाय ' इति बार्हते पञ्चर्चे निविदं दधाति । ' इन्द्रस्य नु वीर्याणि ' इति पूर्वं शस्त्वा ' या त ऊतिरवमा ' इति बार्हते नवर्चे निविदं दधाति । एवं नु यदि रथंतरं पृष्ठं भवति । यद्यु वै बृहत्, बार्हते पूर्वं शस्त्वा ऐकाहिकयोर्निविदौ दध्यात् । इति एकसूक्ते निष्केवल्यमरुत्वतीये स्यातामिति सा स्थितिः । ' पिबा सोममभि, तमु ष्टुहि यो ' इत्युभे । अथ नित्यमेव ऐकाहिकं तृतीयसवनं स्यादिति सा स्थितिः । २४।२.

मरुत्वतीयं अभिप्लवषडहे **प्रथमे**ऽहनि ज्योतिषि । प्रतिपत् ' आ त्वा रथं यथोतये ' । अनुचरः ' इदं वसो सुतमन्धः ' । सूक्तम् ' इन्द्रो रथाय प्रवतं कृणोति ' । **द्वितीये**ऽहनि गवि । प्रतिपत् ' विश्वानरस्य वस्पतिम् ' ।

अनुचरः 'इन्द्र इत् सोमपा एकः'। प्रगाथः ब्राह्मणस्पत्यः 'उत्तिष्ठ ब्रह्मणस्पते'। सूक्तं मरुत्वतीयम् 'इमा उ त्वा पुरुतमस्य कारोः'। २०।३. **तृतीयेऽहनि** आयुषि। प्रतिपत् 'तंतमिद्राधसे महः'। अनुचरः 'त्रय इन्द्रस्य सोमाः'। प्रगाथः ब्राह्मणस्पत्यः 'प्रैतु ब्रह्मणस्पतिः'। सूक्तं मरुत्वतीयं 'तिष्ठा हरी रथ आ युज्यमाना'। २०।४.**चतुर्थेऽहनि** गवि। 'जनिष्ठा उग्रः सहसे'। २१।२. **पञ्चमेऽहनि** आयुषि। 'क्व स्य वीरः को अपश्य'। २१।३. **षष्ठेऽहनि** ज्योतिषि। 'महाँ इन्द्रो नृवदा'। २१।४.

मरुत्वतीयं अविवाक्ये। प्रतिपत्–'त्रिकद्रुकेषु महिषो यवाशिरं' चतुःषष्ट्यक्षरा अतिच्छन्दाः। प्रगाथौ– 'बृहदिन्द्राय गायत, प्र व इन्द्राय बृहते' इति द्वौ। पिन्वन्त्यपीयया संशंसति। सूक्तं मरुत्वतीयं– जनिष्ठा उग्रः सहसे। कया नश्चित्र आ भुवत्, कया त्वं न ऊत्या इति वामदेव्यस्य योनौ रथंतरमूलं भवति। आग्नेयं साम ऐन्द्रीषु। यावन्तः प्रगाथाः, तावन्ति औष्णिहानि तृचानि। धाय्यामन्यां द्विपदां भजते सप्तदशीं, अन्या सूक्तस्य। २७।२.

मरुत्वतीयं चतुर्विंशेऽहनि। प्रतिपत्–आ त्वा रथं यथोतये। अनुचरः– इदं वसो सुतमन्धः। सूक्तं– कया शुभा सवयसः। नवमी परिधानीया 'अनुत्तमा ते मघवन्नकिर्नु' उत्तराः (षट्) पूर्वाः शस्त्वा। १९।८–९.

मरुत्वतीयं छन्दोमे **प्रथमे**। अन्वायत्ता मरुत्वतीयानां प्रतिपदनुचराः, अन्वायत्ता ब्राह्मणस्पत्याः त्र्यहरूपेण (प्रथमेन)। सूक्तं मरुत्वतीयं 'कया शुभा सवयसः' राथंतरम्। जागतम् 'त्यं सु मेषं महया'। बृहत आतानं शस्त्वा रथंतरस्य योनिं शंसति। २६।८,९. **द्वितीये**। त्रैष्टुभानां मरुत्वतीयानां प्रथमं– महाँ इन्द्रो नृवदा, द्वितीयं– इमा उ त्वा पुरुतमस्य, तृतीयं– क्व स्य वीरः को अपश्य। चतुर्थे– महश्चित्त्वमिन्द्र यत एतान्। पञ्चमं जागतं– तमस्य द्यावापृथिवी। पञ्चपञ्च सूक्तानि निष्केवल्यमरुत्वतीययोः शस्यन्ते मध्यमे छन्दोमे। २६।१२. **तृतीये**। त्रैष्टुभानां मरुत्वतीयानां प्रथमं– त्र्यर्यमा मनुषो देवताता। द्वितीयं– इन्द्रो रथाय प्रवतम्। तृतीयं– तिष्ठा हरी रथ आ। चतुर्थे– गायत् साम नभन्यम्। पञ्चमं जागतं– प्र मन्दिने पितुमदर्चता। पञ्च सूक्तानि मरुत्वतीये शस्यन्ते उत्तमे छन्दोमे। २६।१६.

मरुत्वतीयं पृष्ठ्ये षडहे **प्रथमेऽहनि**– आ यात्विन्द्रोऽवस उप नः। व्यूढे समूढे च। संपातौ निष्केवल्यमरुत्वतीये भवतः प्रथमेऽहन्। २२।१. **द्वितीयेऽहनि** व्यूढे समूढे च– इन्द्र सोमं सोमपते। २२।२. **तृतीयेऽहनि**– त्र्यर्यमा मनुषो देवताता। २२।४. **चतुर्थेऽहनि**। प्रतिपत्– तं त्वा यज्ञेभिरीमहे। सूक्तं मरुत्वतीयं–श्रुधी हवमिन्द्र मा रिषण्यः। त्रिष्टुभः विराड्वर्णाः। सवनधरणं विज्ञातत्रैष्टुभं– इन्द्र मरुत्व इह पाहि। सूक्तं मरुत्वतीयं गायत्रं– इमं नु मायिनं हुवे। अथात इह न्यूङ्खयेत् इहा३ इति। स्तोत्रियानुरूपयोश्चैव न्यूङ्खाः उक्थमुखीययोश्च। एतन्नाद्रियेत। आनुष्टुभं न्यूङ्खं न्यूङ्खयेदिति हैक आहुः। वैराजं न्यूङ्खं न्यूङ्खयेदिति सा स्थितिः। मध्यमे पदे न्यूङ्खयेत्। साम्नः प्रगाथः– इन्द्रमिद्देवतातये। कुहश्रुतीयाः, कुह श्रुत इन्द्रः कस्मिन्नद्य, एता विराजो वा अनुष्टभो वा। विज्ञातत्रैष्टुभं सवनधरणं– युध्मस्य ते वृषभस्य। २२।७–८. **पञ्चमेऽहनि**। प्रतिपत्– यत् पाञ्चजन्यया विशा। इत्था हि सोम इन्मदे इति पाङ्क्तम्। अवितासि सुन्वतो वृक्त इति षट्पदाः। तासां गायत्रीशंसं शस्त्रं इति कौषीतकिः। विज्ञातत्रैष्टुभं सवनधरणं– मरुत्वाँ इन्द्र वृषभो। सूक्तं मरुत्वतीयं गायत्रं– अयं ह येन वा इदम्। महानाम्न्यः पृष्ठं भवति– एवा ह्येव, एवा ह्यग्ने, एवा हीन्द्र, एवा हि पूषन्, एवा हि देवाः। पञ्च पदानि पुरीषमिति शस्यन्ते। प्रत्यस्मै पिपीषते तृचः। यो रयिवो रयिंतमः तृचः। त्यमु वो अप्रहणं तृचः। अस्माअस्मा इदन्धसः इति बृहतीं दशमीं करोति। एवा ह्यसि वीरयुः इति त्वेव स्थिता पुरीषस्य समानाभिहारा। साम्नः प्रगाथः– यदिन्द्र नाहुषीष्वाँ। इन्द्रो मदाय वावृधे इति मद्वत् पाङ्क्तम्। प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ इति षट्पदा। विज्ञातत्रैष्टुभं सवनधरणं– अभूरेको रयिपते। २३।१–३. **षष्ठेऽहनि**। प्रतिपत्– स पूर्व्यो महानाम्। यं त्वं रथमिन्द्र मेधसातये, पारुच्छेपम्। सवनधरणं– स यो वृषा वृष्ण्येभिः समोकाः। सूक्तं मरुत्वतीयं गायत्रं – मरुत्वाँ इन्द्र मीढ्वः।

रेवतीर्नः सधमादे, रेवाँ इद्रेवतः स्तोता इति रैवतस्य योनौ वारवन्तीयं ऊहूळं ( व्यूहूळं ) भवति। आग्नेयं साम ऐन्द्रीषु। साम्नः प्रगाथः– मा चिदन्यद् वि शंसत। पारुच्छेपं एन्द्र याह्युप नः। सवनधरणं– प्र घा न्वस्य महतो। २३।६–७.

मरुत्वतीयं **महाव्रते**। प्रतिपत्– आ त्वा रथं यथोतये। अनुचरः– इदं वसो सुतमन्धः। वासुक्रं असत्सु मे जरितः साभिवेगः इति पूर्वं शस्त्वा महाँ इन्द्रो नृवदा चर्षणिप्राः इति त्रैष्टुभे निविदं दधाति। कौआ. १।३.

मरुत्वतीयं **विश्वजिति**। सत्रे। प्रतिपत्– आ त्वा रथं यथोतये। अनुचरः– इदं वसो सुतमन्धः। सूक्तं मरुत्वतीयं– कया शुभा सवयसः। वैराजस्य स्तोत्रियानुरूपौ। न्यूङ्खयति चतुर्थाहवत्। एषा धाय्या, एष ऐन्द्रः प्रगाथः। बृहद्रथंतरयोर्योनी शंसति। २५।११.

मरुत्वतीयं **विषुवति** अहनि। सत्रे। प्रतिपत्– आ त्वा रथं यथोतये। अनुचरः– इदं वसो सुतमन्धः। एष एव नित्य एकाहातानः। सूक्तं मरुत्वतीयं– कया शुभा सवयसः। जागतं सूक्तं– 'त्यं सु मेषं महया'। निविद्धानीयं– 'जनिष्ठा उग्रः सहसे'। २५।३.

मरुत्वतीयं स्वरसामनि **प्रथमे**। प्रतिपत्, अनुचरः, प्रगाथः ब्राह्मणस्पत्यः त्र्यहरूपेण अन्वायत्ताः (प्रथमेनाह्ना)। सूक्तं मरुत्वतीयं 'क्व स्य वीरः को अपश्यत्'। प्रगाथः कद्वान्– कं नव्यो अतसीनाम्। २४।५. रथंतरस्य योनिः। द्वृचः– यमिन्द्र दधिषे त्वम्। विज्ञातत्रैष्टुभं सवनधरणं इन्द्र तुभ्यमिन्मघवन्। २४।६. स्वरसामनि **द्वितीये**– प्रतिपत्, अनुचरः, प्रगाथः ब्राह्मणस्पत्यः त्र्यहरूपेण अन्वायत्ताः ( द्वितीयेनाह्ना )। सूक्तं मरुत्वतीयं– कया शुभा सवयसः। २४।५. प्रगाथः कद्वान्– कदू न्वस्याकृतम्। २४।६. बृहतो योनिः। द्वृचः– स्वरन्ति त्वा सुते नरः। विज्ञातत्रैष्टुभं सवनधरणं–अध्वर्यो वीर प्र महे। २४।७. स्वरसामनि **तृतीये**– प्रतिपत्, अनुचरः, प्रगाथः ब्राह्मणस्पत्यः ( इदं त्र्यं ) त्र्यहरूपेण अन्वायत्ताः ( तृतीयेनाह्ना )। सूक्तं मरुत्वतीयं–गायत् साम नभन्यम्। यज्जायथा अपूर्व्या इत्येतस्मिन् तृतीये स्तोत्रिये अन्वहं स्वराणि अन्वायातयन्ति। ते यदि कुर्युः एतावेव स्तोत्रियानुरूपौ, एषा धाय्या। २४।५. प्रगाथः कद्वान्– इमा उ त्वा पुरूवसो। २४।७. रथंतरस्य योनिः, अथ बृहतः। द्वृचः– दाना मृगो न वारणः। विज्ञातत्रैष्टुभं सवनधरणं– इदं त्यत् पात्रमिन्द्र। २४।८.

**मरुत्वतीयग्रहस्य** पुरोऽनुवाक्यां वैश्वामित्रीमन्वाह। २९।२.

मरुत्वतीयग्रहस्य याज्यापुरोऽनुवाक्ये वैश्वामित्र्यौ ऐन्द्र्यौ त्रैष्टुभौ। माध्यंदिने। अनुवषट्कारः। १५।१.

**मरुत्वतीयानि** कद्वन्ति भवन्ति स्वरसामसु। सत्रे। २४।४.

**महद्विजगमिषोः** मन्थकर्म होमश्च। त्रिरात्रं दीक्षित्वा अमावास्यायां सर्वौषधस्य मन्थं दधिमधुभ्यामुपमथ्य अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जानु आच्य उत्तरतोऽग्नेः कंसे मन्थं कृत्वा हुत्वा होमान् मन्थे संपातमानयेत् ज्येष्ठाय श्रेष्ठाय स्वाहा, वसिष्ठायै स्वाहा, प्रतिष्ठायै स्वाहा, संपदे स्वाहा, आयतनाय स्वाहा इति। तत्सवितुर्वृणीमहे इति पच्छः प्राश्य, तत्सवितुर्वरेण्यं इति पच्छ आचामति महाव्याहृतिभिश्चतुर्थम्। निर्णिज्य कांस्यं (कंसं), चर्मणि वा स्थण्डिले वा संविशति। स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात्। कौआ. ९।८.

**महादेवस्य** अष्टनामधेयस्य प्रशंसा। सहस्राक्षः। ६।१. **भवः**– तस्य व्रतं आर्द्रमेव वासः परिदधीत। ६।२. **शर्वः**– तस्य व्रतं सर्वमेव नाश्नीयात्। ६।३. **पशुपतिः**– तस्य व्रतं ब्राह्मणमेव न परिवदेत्। ६।४. **उग्रः**– तस्य व्रतं स्त्रिया एव विवरं नेक्षेत। ६।५. **महान् देवः**– तस्य व्रतं उद्यन्तं नेक्षेत, अस्तं यन्तं च। ६।६. **रुद्रः**– तस्य व्रतं विमूर्तमेव नाश्नीयात् मज्जानं च। ६।७. **ईशानः**– तस्य व्रतं अन्नमेवेच्छमानं न प्रत्याचक्षीत। ६।८. **अशनिः**– तस्य व्रतं सत्यमेव वदेत्, हिरण्यं च बिभृयात्। ६।९.

**महाभूतानि**। पञ्चेमानि भूतानि भवन्तीति ह स्माह वालिशिखायानः पृथिवी वायुराकाशमापो ज्योतींषि

( ऐतरेयवत् क्रमोऽत्र ) । तानि मिथः संहितानि भवन्ति । कौआ. ७।२२.

**महाव्रतम्** । तन्न परस्मै एतदहः शंसेत् । कौआ. ८।६.

महाव्रतं परस्मै न शंसेत् । कामं तु सत्रिणां होता शंसेत् पित्रे वा आचार्याय वा । तस्य पञ्चविंशः स्तोमः । ऐन्द्रश्च ऋषभः प्राजापत्यश्चाजः उपालम्भ्यौ । ऐन्द्रं वा एतदहः । कौआ. ११।१. आज्यं, प्रउगः । ११।२. मरुत्वतीयम् । ११।३. अथैता आज्याहुतीर्जुहोति । अष्टौ भवन्ति । अथ परिमादान् जपान् जपति । साम– भूते छदांसि, क्रोशानुक्रोशे, पयः, अर्के च अर्कपुष्पं च । तेषु यदा पर्यायं सामगाः स्तुवते अथ होतारमाहुः अनुजपेति । ते यदि स्तुवीरन्, यदि न स्तुवीरन् अन्वेव जपेत् । ११।४. अत्रैव तिष्ठन् अग्निं यथाऽङ्ग उपतिष्ठते नमो नम इति । ११।५. उपनिधाय प्रेङ्खफलकं त्रिरभ्यान्य त्रिरभ्यवानिति । ११।६. निष्केवल्यं महाव्रते । २१।१. अननुवषट्कृते एव प्रेङ्खं ग्रथ्नन्ति, सग्रहमेवायं ( होता ) तं प्राङुपावरोहति, प्रत्यङ् प्रेङ्खफलकमपोहति । परामृशन् ग्रहं जपति । वैश्वकर्मणः अतिग्राह्यः । २१।१७. वैश्वदेवम् । आग्निमारुतम् । कौआ. २१।१८.

**महाव्रतस्तोत्रम्** । परस्मै न महाव्रतेन स्तुयात् । कौआ. ८।६.

**महाव्रते** । स्तोमातिशंसं प्रातःसवनेषु शस्त्वा अहीनसूक्तानि मध्यंदिने शंसन्ति । अहीनसूक्तानि शस्त्वा ऐकाहिकानि शंसन्ति । २९।८.

**माध्यंदिनं** सवनं ऐन्द्रं त्रैष्टुभम् । १५।१३.

माध्यंदिनं सवनं रुद्राणाम् । १६।१, ३०।१.

**माध्यंदिने** 'अध्वर्यो शौंसावो३' इत्याहावः (मकाररहितः ) । १४।३.

माध्यंदिने उन्नीयमानेभ्यो वासिष्ठीः ऐन्द्रीः त्रिष्टुभः अन्वाह, दश । अत्र दश चमसानुन्नयन्ति । ऐन्द्रीभिस्त्रिष्टुब्भिः मध्यंदिने प्रस्थितानां यजन्ति अनुवषट् कुर्वन्ति । अथेडा अथ होतृचमसः । हुतेषु दाक्षिणेषु दक्षिणा नीयन्ते । २९।२.

माध्यंदिने ग्रावस्तोत्रीयं पवमानः दधिघर्मः हविष्पङ्क्तिः प्रस्थितयाज्याः दाक्षिणहोमाः दक्षिणाः । १५।१.

माध्यंदिने पशुं श्रपयन्ति । पशुपुरोडाशेन चरन्ति । १२।६.

माध्यंदिने प्रतिगरः 'शौंसामो दैव' इति । १४।३.

माध्यंदिने शस्त्रजपः 'उक्थमवाचीन्द्राय' इति । उक्थशाः इत्यध्वर्युः । १४।३.

माध्यंदिने सूक्तस्य मध्ये निविद् धीयते । १४।१.

**मार्जनं** इळावप्राणोत्तरं पितृयज्ञे । ५।७.

मार्जनं पत्नीसंयाजेषु आज्येडोत्तरं होतुः । दर्शपूर्ण० । ३।९.

मार्जनं, पवित्रवति मार्जयन्ते इडाभक्षणोत्तरं । ३।७.

**मुन्ययनं** फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । स एष सर्वकामस्य यज्ञः । ४।१०.

**मैत्रावरुणः** एव सर्वेभ्यः प्रेष्यति । स वै तिष्ठन् प्रेष्यति । वक्र इव प्रणतः अनुब्रूयात् । २८।१–२.

मैत्रावरुणः चतुर्विंशे षट्त्रिंशतं शंसति । ३०।१०.

मैत्रावरुणः छन्दोमेषु पञ्चपञ्च सूक्तानि शंसति । २९।८, ३०।१०.

मैत्रावरुणः मित्रं वयं हवामहे इति यजति मैत्रावरुण्या । प्रस्थितयाज्या । २८।३.

मैत्रावरुणश्च ब्राह्मणाच्छंसी च द्विपर्यासौ । ३०।९.

मैत्रावरुणश्चाच्छावाकश्च प्रातःसवने द्विदेवत्याः शंसतः। तृतीयसवने द्विदेवत्याः शंसतः । २८।९. वैश्वामित्रौ स्तोत्रियौ भवतः । वासिष्ठौ नवर्चौ पर्यासौ कुरुतः । २८।१०.

**मैत्रावरुणस्य** कार्ष्णः अहरहः पर्यासो भवति । ३०।९.

मैत्रावरुणस्य ग्रहस्य सकृद्भक्षयति । १३।६.

मैत्रावरुणस्य ( ऋत्विजः ) चर्षणीधृतं मघवानमुक्थ्यं इति उक्थ्ये क्रतौ तृचः । वासिष्ठः अहरहः पर्यासो भवति । ( अप्सु ? ) मैत्रावरुणाय प्रणयन्ति तृतीयेऽहन् । चतुर्थेऽहन् स्वेस्वे छन्दसि प्रणयन्ति । गायत्रीषु मैत्रावरुणाय प्रणयन्ति । पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति पञ्चमेऽहन् । द्विपदासु षष्ठेऽहन् प्रणयन्ति । ३०।३.

वालखिल्याः मैत्रावरुणः शंसति षष्ठेऽहन् । ३०।४. तार्क्ष्ये दूरोहणं रोहति । ३०।५.

मैत्रावरुणस्य दशमेऽहन् 'मा चिदन्यद् वि शंसत, मा मेम मा श्रमिष्म' इति मैधातिथं पृष्ठं भवति । द्विपदाः शस्त्वा ऐकाहिकानि शंसन्ति । २९।५.

मैत्रावरुणस्य वामदेव्यं पृष्ठं भवति । अथैतान् साम-प्रगाथान् शंसन्ति । पञ्चर्चे उक्थमुखं भवति । एकादशर्चः पर्यासः । विश्वामित्रस्य च वामदेवस्य च शंसति । वामदेवः पर्यासः । वैश्वामित्रमुक्थमुखं भवति । इदं प्रायणीयोदयनीययोः एकाहे च । २९।३.

मैत्रावरुणस्य षष्ठे एव अहन् पञ्चाहावं शस्त्रं भवति ( इतराणि तु ) चतुराहावानि शस्त्राणि । ३०।१०.

**मैत्रावरुणी** पयस्या दाक्षायणयज्ञे । ४।४.

**यजमानः** । यदा यूपमभ्यञ्जन्ति , तदा स्वयमेव स्वभ्यक्तं कुर्वीत । १०।१.

यजमानः स्तोत्रमुपगाति । १७।७.

**यज्ञः** । नन्दति ह वै यज्ञो विदुषा आगच्छता, अयं मे समृद्धं भविष्यति , अयं मे तत् समर्धयिष्यति इति । २७।१.

**यवाग्रयणं** व्रीह्याग्रयणवत् । ४।१४.

**याज्या** अनूबन्ध्यावपायाः– युवं वस्त्राणि पीवसा । पशुपुरोडाशस्य– यद् बंहिष्ठं नातिविधे । हविषः– प्र बाहवा सिसृतम् । १८।१३.

याज्या आग्निमारुतशस्त्रस्य अग्निष्टोमे–'अग्ने मरुद्भिः शुभयद्भिः' आग्निमारुती जगती मद्वती । १६।९.

याज्या आज्यशस्त्रस्य अग्निष्टोमे । त्रयस्त्रिंशदक्षरा विराट् । 'अग्न इन्द्रश्च दाशुषो' इति । पदं परिशिष्य विराजोऽर्धर्चे अवानिति । उत्तरेणार्धर्चेन वषट् करोति । अनुवषट् करोति । १४।२.

याज्या आश्विनशस्त्रस्य– द्वाभ्यां यजेत्, अनवानं गायत्रीमुक्त्वा विराजोऽर्धर्चे अवानिति । उत्तरेण विराजोऽर्धर्चेन वषट् करोति । विराजैव यजेत् इति ह स्माह कौषीतकिः । 'अश्विना वायुना युवम्' इति त्वेव स्थिता आश्विनी त्रिष्टुप् । तिरोअह्न्यवती । अनुवषट् करोति । १८।५.

याज्या ऐकाहिकी निष्केवल्यस्य महाव्रते । कौआ. २।१७.

याज्या निष्केवल्यस्य– पिबा सोममिन्द्र मन्दतु । विराट् । अनुवषट् करोति । १५।५.

**याज्यापुरोऽनुवाक्याः** उदवसानीयायां पदपङ्क्तयः अतिरात्रे । १८।१४.

याज्यापुरोऽनुवाक्याः पुनराधेये पदपङ्क्तयः । १।४.

याज्यापुरोऽनुवाक्याः विपर्यस्यति । याः प्रायणीयायां पुरोऽनुवाक्यास्ता उदवसानीयायां याज्याः करोति, या याज्यास्ताः पुरोऽनुवाक्याः । ७।८.

याज्यापुरोऽनुवाक्याः हविषः उपसत्सु । गायत्र्यौ आग्नेय्यौ , त्रिष्टुभौ सौम्यौ , जगत्यौ वैष्णव्यौ । ता वै विपर्यस्यति । याः पूर्वाह्णे पुरोऽनुवाक्यास्ता अपराह्णे याज्याः करोति , या याज्यास्ताः पुरोऽनुवाक्याः । ८।९.

**याज्यापुरोऽनुवाक्ये** अतिरात्रे हारियोजनस्य , त्रिष्टुभमनूच्य जगत्या यजति । १८।६.

याज्यापुरोऽनुवाक्ये आदित्यग्रहस्य त्रिष्टुभमनूच्य त्रिष्टुभा यजति । १६।१.

याज्यापुरोऽनुवाक्ये दीक्षणीयायां अग्निष्टोमे त्रिष्टुभौ 'उप वां जिह्वा घृत, प्रति वां जिह्वा घृत' । ७।२.

याज्यापुरोऽनुवाक्ये मरुत्वतीयग्रहस्य वैश्वामित्र्यौ ऐन्द्र्यौ त्रैष्टुभौ । १५।१.

याज्यापुरोऽनुवाक्ये सावित्रग्रहस्य, त्रिष्टुभमनूच्य जगत्या यजति । तृतीयसवने । १६।२.

याज्यापुरोऽनुवाक्ये हविषः अतिथ्यायां त्रिष्टुभौ । ८।२.

**याज्या** प्रउगस्य 'विश्वेभिः सोम्यं मधु' वैश्वदेवी गायत्री । अनुवषट् करोति । १४।५.

याज्या प्रस्थितानां होतुः 'इदं ते सोम्यं मधु' अनु-वषट् करोति । १३।६.

याज्या मरुत्वतीयशस्त्रस्य 'ये त्वाऽहिहत्ये मघवन्' इत्यैन्द्री त्रिष्टुप् । १५।३.

याज्या वैश्वदेवशस्त्रस्य 'विश्वे देवाः शृणुतेमं' वैश्वदेवी मद्वती त्रिष्टुप् । १६।४.

याज्या षोडशिस्तोत्रे विहृतया यजेत् इति हैक आहुः। 'एवा हि वाजी अपाः पूर्वेषां हरिवः सुतानाम्, वाजी हि वाजी अथो इदं सवनं केवलं ते। वोह्ळा हि वाजी ममद्धि सोमं मधुमन्तमिन्द्र, जिष्णुर्हि वाजी सत्रा वृषं जठर आ वृषस्व' इति। अविहृतया इति त्वेव स्थितम्। १७।४.

याज्या समानेऽहनि एकैव ऋक् पुनःपुनर्न भवति। वषट्कारेण सा (ऋक्) यातयामा भवति। २२।१.

याज्या सवनीयपशोः। वपायाः भुवो यज्ञस्य रजसश्च। पुरोडाशस्य– प्र वः शुक्राय। हविषः– प्र कारवो मनना। एकादशिनीं त्वेवान्वायातयेयुः इति सा स्थितिः यदि पृष्ठोपायं भवति। १२।७.

याज्या सवनीयपुरोडाशस्विष्टकृतः 'हविरग्ने वीहि' इति। १३।३.

याज्याः। उक्थयाज्या ऐकाहिकाः। अनुवषट् कुर्वन्ति। ३०।१०. छन्दोमेषु च। २९।८.

याज्याः तिरोअह्न्यवत्यः त्रिष्टुभः। अनुवषट् कुर्वन्ति (आश्विनोक्थग्रहस्य)। ३०।११.

याज्याः तृतीयसवने उन्नीयमानेभ्योऽन्वाह। अथ होत्राः संयजन्ति, जगत्यो याज्याः। अनुवषट् कुर्वन्ति। ३०।१.

युगे। दशमे युगे। दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे। तद्धैतदहः (महाव्रतम्) इन्द्रः अङ्गिरसे प्रोवाच, अङ्गिरा दीर्घतमसे। तत उ ह दीर्घतमा दश पुरुषायुषाणि जिजीव। तदप्येतदृषिराह 'दीर्घतमा मामतेयो॰' इति। कौआ. २।१७.

यूपं अग्नौ प्रहरेत् तथैव वा अवस्थापयेत्। १०।२.

यूपः अपनतः नाम। अशनायतो वा एतद्रूपं अभिनत इवोदरेण अथाहवनीयं पुनरभ्यावृत्तः (मध्ये बहिर्वक्रः, अग्रे च आहवनीयमभि वलितः) तादृशं न कुर्यात्। १०।१.

यूपः अष्टाश्रिर्निष्ठितो भवति। १०।१.

यूपपरिमाणं दैर्घ्येण। त्र्यरत्निः, चतुररत्निः, पञ्चारत्निः, षडरत्निः, सप्तारत्निः, अष्टारत्निः, नवारत्निः, दशारत्निः, एकादशारत्निः, द्वादशारत्निः। एता मात्राः संपदो यूपस्य, तासामेकां संपदमभिसंपाद्य यूपं कुर्वीत। अपरिमित एव स्यात्। यत्रैव मनसा वेलां मन्येत तद्यूपस्य वेदेश्चेति। वाजपेये एव सप्तदशारत्निः। १०।१.

यूपवृक्षः। एको द्रव्यः, एको गर्त्यः, एको योऽवाचीनवकलः स गर्त्यः, तस्य आशां नेयात्। (एकः द्रव्यः नाम सर्वथा शाखाशून्यः। गर्त्यस्तु ब्राह्मणेनैव व्याख्यातः अवाचीनवकलः इति। वकलः अल्पा शाखा। अवाचीनः अधोमुखः वकलः यस्य। तस्य द्विविधस्य वृक्षस्य यूपार्थे आशा न कर्तव्या। स न ग्राह्य इत्यर्थः)। अथ य ऊर्ध्ववकलः द्रव्यः स मानुषः, कामं तस्यापि कुर्वीत (यूपम्)। अथ यस्य प्रसव्या आदित्यस्यान्वावृत्तवकलः स यूप्यस्य स्वर्ग्यः (अत्र सर्वः पाठ आर्षः। तात्पर्यं तु– यस्य वकलाः प्रदक्षिणावर्ताः आदित्य इव, स वृक्षः स्वर्गदः। ऊर्ध्वमुखवकलोऽपि मानुषत्वात् न त्याज्यः इति)। एकस्थो भ्रातृव्यः, यो वा अनुवृत्तः पलाशैः आमूला( लात्) स्यात् सोऽनग्नः, स पशव्यः। तं पशुकामः कुर्वीत। (एकस्थः अभ्रातृव्यः इति शुद्धः पाठः। यः वृक्षः एकस्थः समन्तात् यस्य कोऽपि वृक्षो नास्ति, सः न भ्रातृव्यः न शत्रुरिव। स ग्राह्यः। यो वा मूलादारभ्य अग्रपर्यन्तं अल्पाभिः शाखाभिः चितः, स पशुप्रदः। अर्थात् स ग्राह्यः। तथा च अपनतः एकद्रव्यः गर्त्यश्च वृक्षो न ग्राह्यः इतरे ग्राह्याः इति)। १०।२.

यूपाञ्जनीयाः ऋचः अग्निष्टोमे एकयूपे एकपशौ। 'अञ्जन्ति त्वामध्वरे' इत्यज्यमानायान्वाह। 'उच्छ्रयस्व वनस्पते, समिद्धस्य श्रयमाणः, जातो जायते सुदिनत्वे, ऊर्ध्व ऊ षु ण ऊतये, ऊर्ध्वो नः पाह्यंहसो' इति उच्छ्रीयमाणायान्वाह। परिधानीया 'युवा सुवासाः'। ता वै सप्तान्वाह। त्रिः प्रथमया त्रिरुत्तमया एकादश संपद्यन्ते। १०।२.

यूपीयवृक्षाः। पालाशं ब्रह्मवर्चसकामः कुर्वीत, बैल्वमन्नाद्यकामः, खादिरं स्वर्गकामः। १०।१.

यूपे। एकयूपे पश्वेकादशिन्याम्। यद्येकयूपे एकादशिनीमालभेरन् पशौपशौ एव अध्वर्युः संप्रेष्यति।

पशौपशौ एव 'युवा सुवासा इति सैव परिधानीया, सा परिवीयमाणाय। १०|२.

**यूपैकादशिन्यां** एता एव सप्त। 'अञ्जन्ति त्वाम-ध्वरे–युवा सुवासाः' इति सप्तानुब्रूयात्। अथ यमुत्तमं संमिन्वन्ति तस्मिन् यत् सूक्तं परिशिष्येत, तदनुवर्तयेत् पुरस्तात् प्रगाथस्य। 'शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रे' इति सर्वानेवानुवदति। 'युवा सुवासाः' इति परिधानीया, सा परिवीयमाणाय। १०|२.

**यूपोच्छ्रयणकालः**। उपवसथे यूपमुच्छ्रयन्ति। १०|१.

**राक्षोघ्नीः** पञ्च–'कृणुष्व पाजः प्रसितिं'। प्रवर्ग्ये। ८|४.

**राजनं** पृष्ठं भवति साम निष्केवल्यस्य महाव्रते। कौआ. २|१.

**राज्याय** स्वाराज्याय साम्राज्याय कामप्राय। उत्तरोत्तरं अत्र अधिकतरामिव। कौआ. १|७.

**रात्रौ** पञ्च छन्दांसि शंसति अनुष्टुभं गायत्रीं उष्णिहं त्रिष्टुभं जगतीमिति। पञ्चाहावा रात्रिः, वाजपेयस्य चातिरिक्तोक्थम्। ३०|११.

**रुचितवती ऋक्** 'अरूरुचदुषसः'। प्रवर्ग्ये रुचिते घर्मे। ८|६.

**रुद्राणां** माध्यंदिनं सवनम्। ३०|१.

**रैभीः शंसति** ब्राह्मणाच्छंसी षष्ठेऽहन्। ३०|५.

**रौद्री ऋक्** 'अर्हन् बिभर्षि' प्रवर्ग्ये शकलपरि-चयने। ८|४.

**वंशब्राह्मणं** कौषीतक्यारण्यकस्य। कौआ. १५.

**वत्सं स्पृशते** अग्निहोत्रे अग्न्युपस्थानोत्तरम्। २|४.

**वनस्पतिः**। आवाहने 'आवह देवान् यजमानाय, अग्निमग्न आवह, वनस्पतिमावह, इन्द्रं वसुमन्तमावह' इति प्रातःसवने। 'इन्द्रं रुद्रवन्तमावह' इति माध्यंदिने। 'इन्द्रमादित्यवन्तमृभुवन्तं' इति तृतीयसवने इति। केचित्तु अन्तत एव वनस्पतिमावाहयन्ति तृतीयसवने एनं यजन्तीति वदन्तः (परंतु) पशुमेवोपसंधाय वनस्पतिरावाह्यः। १२|७.

**वपया** चरन्ति तेन प्रातःसवनं तीव्रीकृतम्। श्रपयन्ति पशुपुरोळाशेन चरन्ति, तेन माध्यंदिनं सवनम्। एनेन तृतीयसवने प्रचरन्ति, तेन तृतीयसवनं तीव्रीकृतम्। १२|६.

**वरुणप्रघासाः**। अग्निं प्रणयन्ति, अग्निमन्थनं, सप्त-दश सामिधेन्यः, सद्वन्तौ आज्यभागौ, विराजौ संयाज्ये, नव प्रयाजाः, नवानुयाजाः, समानानि पञ्चसंचराणि पौष्णान्तानि। ५|३. ऐन्द्राग्नो द्वादशकपालः, वारुणी पयस्या, मारुती पयस्या, काय एककपालः, वाजिनो यजति, मिथुनौ गावौ दक्षिणा। अप्सु वरुणं यजति, अवभृथः। परस्तात् पौर्णमासेन यजते। ५|४.

**वशीकारार्थः** दैवसरः नाम होमः। कौआ. ४|४.

**वषट्कारः** षळिति वषट् करोति आज्यभागयोः। पुरस्ताद्दीर्घं उपरिष्टात् ह्रस्वम्। ३|५.

**वषट्कारानुमन्त्रणजपः** 'ओजः सहः सह ओजः स्वः' इति। ३|५.

**वषट्कारेण** ऋक् समानेऽहन् यातयामा भवति। न शस्त्रेण नानुवचनेन। २२|१.

**वसिष्ठयज्ञः** फाल्गुन्याममावास्यायां प्रयुङ्क्ते। प्रजायते प्रजया पशुभिः, अभि द्विषतो भातृव्यान् भवति। ४|८.

**वसूनां** प्रातःसवनम्। ३०|१.

**वाक्**। सर्वा वाक् ब्रह्म इति ह स्माह लौहिक्यः। कौआ. ७|२३.

**वाग्देवत्यः** पशुः उपांशु भवति। २५|१०.

**वाग्विसर्गः**। प्रातरनुवाकान्ते 'अभूदुषा रुशत्पशुः' इति परिदधाति। तस्यां वाचमुत्सृजति। ११|६.

**वाजपेयस्य** अतिरिक्तोक्थं पञ्चाहावम्। पञ्चाहावा रात्रिः (अतिरात्रे)। ३०|११.

**वाजपेये** एव सप्तदशारत्निः यूपः। अन्यत्र तु त्र्यरत्नित्वादिद्वादशारत्नित्वान्तः। १०|१.

**वामदेव्यं** पृष्ठं मैत्रावरुणस्य प्रायणीयोदयनीययोः एकाहे च। २९|३.

**वायौ** अग्नेः पावकां तनूं देवा न्यदधुः। १|१.

**वार्त्रघ्नः** पूर्वं आज्यभागः पुनराधेये । 'अग्निं स्तोमेन बोधय' इत्यग्नये बुद्धिमते पूर्वं कुर्यात् इति हैक आहुः । वार्त्रघ्नस्त्वेव स्थितः । १।४.

**वार्त्रघ्नौ** आज्यभागौ अवभृथे । अप्सुमन्तौ हैके कुर्वन्ति, वार्त्रघ्नौ त्वेव स्थितौ । १८।१०.

वार्त्रघ्नौ आज्यभागौ दीक्षणीयायां अग्निष्टोमे । ७।२.

वार्त्रघ्नौ आज्यभागौ पौर्णमास्याम् । 'अग्निर्वृत्राणि, त्वं सोमासि' । ३।५.

**वालखिल्याः** । स्तोत्रियानुरूपौ शस्त्वा वालखिल्याः शंसति । यद्वै उर्वरयोः असंभिन्नं भवति खिलमिति वै तदाचक्षते । बालमात्रा उ हेमे प्राणाः असंभिन्नाः । तद्यदसंभिन्नाः तस्मात् वालखिल्याः । ३०।८.

**वालखिल्यानि** मैत्रावरुणः शंसति षष्ठेऽहन् शिल्पम् । एता वालखिल्याः विहृताः शंसति । पच्छः प्रथमे सूक्ते, अर्धर्चशो द्वितीये, ऋचमृचं तृतीये । विपर्यस्येन्नाराशंसे ( सप्तमाष्टमे सूक्ते ) । ३०।४.

**विचक्षणवत्या** वाचा दीक्षितः अन्यस्य नाम गृह्णीयात्, यदि आवश्यकता । 'विचक्षण केशवशर्मन्' इ० । ७।३.

**विज्ञातत्रैष्टुभानि** सवनधरणानि । एतान्यपि व्यूढच्छन्दसः मध्यंदिनान्न च्यवन्ते । २२।७.

**विद्वान्** । नन्दति ह वै यज्ञो विदुषा आगच्छता, अयं मे समृद्धं करिष्यति, अयं मे तत् समर्धयिष्यति इति । २७।१.

**विभक्तयः** प्रयाजानुयाजेषु पुनराधेये । 'अग्न आ याहि वीतये, अग्निं दूतं वृणीमहे, अग्निनाऽग्निः समिध्यते, अग्निर्वृत्राणि जङ्घनत्, अग्नेः स्तोमं मनामहे, अग्ना यो मर्त्यो दुवः, इत्येतासामृचां प्रतीकानि विभक्तयः । ता वै षड भवन्ति, यथायथं उत्तमौ प्रयाजानुयाजौ । १।४.

**विश्वजित्** । सत्रे । इन्द्रो विश्वजित् । २४।१.

**विश्वजित् सर्वपृष्ठ** एकाहः । सत्रे । यद्धि अन्वहं षळहे क्रियते, तदेकाहे विश्वजिति क्रियते । वैराजं पृष्ठं, माध्यंदिने पवमाने रथंतरं, बृहत् तृतीये पवमाने, शाक्वरं मैत्रावरुणस्य, वैरूपं ब्राह्मणाच्छंसिनः, रैवतमच्छावाकस्य । आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यम् ( वैश्वदेवं, आग्निमारुतं ) । यद्धि षष्ठस्याह्नः तृतीयसवनं, तत् तृतीयसवनं, ऐकाहिकी प्रतिपत्, अभिवान् अनुचरः । २५।११. तृतीयसवने शिल्पानि शस्यन्ते । २५।१२. सः ( विश्वजित् ) सर्वस्तोमः सर्वपृष्ठः अग्निष्टोमः संतिष्ठते । स सात्रिकः सांवत्सरिको विश्वजित् । विश्वजिच्चेत् सर्वमेव (दद्यात्), सर्वमु चेत् विश्वजिदेव । सहस्रं देयम्, सर्वं वै तत्, यत् सहस्रं इति कौषीतकिः । २५।१३. वत्सच्छवीं परिदधीत । उदुम्बरे वसेत्, नैषादे वसेत्, वैश्ये वसेत्, क्षत्रिये वसेत्, ब्राह्मणे समानगोत्रे वसेत् । संवत्सरं चरेत्, अधःसंवेशी, अफालकृष्टस्य परिगृह्णन् नान्यं याचन् । द्वादशरात्रं चरित्वा अथान्यस्यै बुभूषायै स्यात् इति ह स्माह कौषीतकिः । २५।१४.

**विश्वजिति** । स्तोमातिशंसं प्रातःसवनेषु शस्त्वा अहीनसूक्तानि शंसन्ति, अहीनसूक्तानि शस्त्वा ऐकाहिकानि शंसन्ति मध्यंदिने । २९।८.

**विषुवति** स्तोमातिशंसं प्रातःसवने शस्त्वा अहीनसूक्तानि मध्यंदिने शंसन्ति । अहीनसूक्तानि शस्त्वा ऐकाहिकानि शंसन्ति ( तृतीयसवने ) । २९।८.

**विषुवान्** । सत्रे । तस्य पुरस्तात् उपरिष्टाच्चेति द्वौ त्र्यहौ । सप्तदशस्तोमं त्र्यहं उभयतो विषुवन्तं उपायन्ति, तान् वै स्वरसामान इत्याचक्षते । २४।३. कद्वन्ति मरुत्वतीयानि भवन्ति, कद्वन्तो निष्केवल्येषु प्रगाथाः । आनुष्टुभानि निविद्धानानि भवन्ति । २४।४.

विषुवान् सत्रस्य मध्ये ( षाण्मास्ययोर्मध्ये, अयनद्वयस्य मध्ये ) दिवाकीर्त्यः । आज्यम् । २५।१,३. प्रउगः २५।१,२,३. मरुत्वतीयम् । २५।३. निष्केवल्यम् । २५।४-८. वैश्वदेवम्, आग्निमारुतम् । २५।९. पुरा आदित्यस्यास्तमयात् एतदहः संस्थापयिषेयुः सप्रातरनुवाकेन सपत्नीसंयाजेन । प्रातरनुवाकं 'अग्निं मन्ये पितरमापिं' इत्यनया प्रतिपद्यते । तदु ह स्माह कौषीतकिः यथायथमेव तं ( प्रातरनुवाकं ) उपाकुर्यात् । यथायथं उपांश्वन्तर्यामौ हूयेते । वासिष्ठमाप्रीसूक्तम् । शुक्र एतस्याह्नः पिङ्गाक्षो होता स्यादिति हैक आहुः । यथोपपादं इति त्वेव स्थितम् । सौर्यः पशुरुपालम्भ्यः सवनीयः ।

स उपांशु भवति । विषुवतः उत्तरं त्रीन् स्वरसाम्नः आवृत्तान् उपयन्ति । पुरस्तात् प्रवृत्तक्रमेणैव, उपरिष्टात्तु आवृत्तक्रमेण । २५।१०.

**विहरणं**, षोळशी इत्यत्र द्रष्टव्यम् । १७।२,४.

**वीणा** कुशलेन वादयित्रा आरब्धा कृत्स्नं वीणाऽर्थं साधयति । कौआ. ८।१०.

वीणा दैवी मानुषी च । तदुपासनम् । शरीरमेव वीणा, तत्र च वागेव वीणा । कौआ. ८।९-१०.

**वीरकामार्थे** वीरं ध्यायात् प्रवर्ग्ये, गणानां त्वा इति सूक्तस्य अन्तिमपादानुवचने । ८।५.

**वृधन्वन्तौ** आज्यभागौ अमावास्यायाम् । अग्निः प्रत्नेन मन्मना, सोम गीर्भिः । ३।५.

**वृषाकपिं** शंसति पङ्क्तिशंसं, न्यूङ्खं ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**वेणुयवाग्रयणम्** । वसन्ते आगते पक्वेषु वेणुयवेषु वेणुयवानुद्धर्तवै आह । अमावास्यया इष्ट्वा एतेन यजेत । एतेन इष्ट्वा पौर्णमास्या वा यजेत, पूर्वपक्षे यस्मिन् नक्षत्रे कामयेत तस्मिन् वा यजेत । सप्तदश सामिधेन्यः, सद्वन्तौ आज्यभागौ, विराजौ संयाज्ये । सौम्यश्चरुः । मधुपर्कं ददाति । तां हैके आग्नेयीं वा वारुणीं वा प्राजापत्यां वा कुर्वन्ति । ४।१३.

**वेदं** न स्तृणाति दीक्षणीयायां अग्निष्टोमे । ७।३.

वेदं स्तृणाति होता दर्शपूर्ण० । ३।९.

**वेदतृणानि** पत्नी अन्तरोरू कुरुते दर्शपूर्ण० । ३।९.

**वेदातिशेषमुपतिष्ठते** होता । दर्शपूर्ण० । ३।९.

**वेदिः** । यत्रैव मनसा वेलां ( परिमाणं ) मन्येत, तद्यूपस्य च वेदेश्चेति ह स्माह । १०।१.

**वेदे** पत्नीं न वाचयति दीक्षणीयायां अग्निष्टोमे । ७।३.

वेदे पत्नीं वाचयति होता दर्शपूर्ण ० । ३।९.

**वैमृधः** अनुनिर्वाप्यः । इन्द्राय विमृधे एकादशकपालं पुरोळाशं निर्वपति । आमावास्यमेव एतत् प्रत्याहरति, यत् पौर्णमास्यामिन्द्रं यजति । ४।१.

**वैश्वदेवं** अग्निप्लवषडहे **प्रथमेऽहनि** ज्योतिषि । प्रतिपत्–तत्सवितुर्वृणी०। अनुचरः–अद्या नो देव सवितः। सावित्रं सूक्तं– युञ्जते मन उत । द्यावापृथिवीयं– प्र द्यावा यज्ञैः पृथिवी । आर्भवं– इहेह वो मनसा बन्धुता । वैश्वदेवं– कथा देवानां कतमस्य । २०।२. **द्वितीयेऽहनि** गवि । प्रतिपत्– विश्वो देवस्य नेतुः । अनुचरः– आ विश्वदेवं सत्पतिम् । सावित्रं– अभूद्देवः सविता वन्द्यो । द्यावापृथिवीयं– ते हि द्यावापृथिवी विश्व । आर्भवं– ततं मे अपस्तदु । वैश्वदेवं– देवान् हुवे बृहच्छ्रवसः। २०।३. **तृतीयेऽहनि** आयुषि । सावित्रं सूक्तं– उदु ष्य देवः सविता । द्यावापृथिवीयं– घृतेन द्यावापृथिवी । आर्भवं– तक्षन् रथं सुवृतम् । वैश्वदेवं– आ नो भद्राः क्रतवो । २०।४. **चतुर्थेऽहनि** गवि । सावित्रं– तद्देवस्य सवितुः । द्यावापृथिवीयं– ते हि द्यावापृथिवी । आर्भवं– अनश्वो जातो अन । वैश्वदेवं– अग्निरिन्द्रो वरुणो । २१।२. **पञ्चमेऽहनि** आयुषि । सावित्रं– उदु ष्य देवः सविता । द्यावापृथिवीयं– घृतवती भुवनाना । आर्भवं– ततं मे अपस्तदु । वैश्वदेवं– कथा देवानां कतमस्य । २१।३. **षष्ठेऽहनि** ज्योतिषि । सावित्रं– तद्देवस्य सवितुः । द्यावापृथिवीयं– घृतेन द्यावापृथिवी । आर्भवं– किमु श्रेष्ठः किं यविष्ठो । वैश्वदेवं– अबुध्रमु त्य इन्द्रवन्तो । २१।४.

वैश्वदेवं अविवाक्ये । प्रतिपत्– अभि त्यं देवं सवितारम् । चतुःषष्ट्यक्षरा अतिच्छन्दाः । अनुचरः अभिवान् । पञ्चक्रीयं, आ नो भद्रीयं, द्विपदाः । २७।२.

वैश्वदेवं चतुर्विंशेऽहनि । प्रतिपत्– तत्सवितुर्वृणीमहे । अनुचरः– अद्या नो देव सवितः । सावित्रं– तद्देवस्य सवितुर् । द्यावापृथिवीयं– ते हि द्यावापृथिवी । आर्भवं– किमु श्रेष्ठः किं यविष्ठो । वैश्वदेवं– यज्ञस्य वो रथ्यं, शार्यातम् । १९।९.

वैश्वदेवं छन्दोमे **प्रथमे** । सावित्रं– तत्सवितुर्वरेण्यम् । द्यावापृथिवीयं– प्रेतां यज्ञस्य शंभुवा । आर्भवं– अयं देवाय जन्मने । वैश्वदेवं– ऋजुनीती नो, पञ्चर्चम् । द्विपदा– आ याहि वनसा सह । वैश्वदेवं– ओमासश्चर्षणीधृतः, गायत्रम् । २६।१०. **द्वितीये** । सावित्रं– हिरण्यपाणिमूतये । द्यावापृथिवीयं– मही द्यौः पृथिवी च । आर्भवं– युवाना पितरा पुनः । वैश्वदेवं– देवानामिदवो महत्, नवर्चम् । द्विपदा– इमा नु कं भुवना । वैश्वदेवं– विश्वे-देवा ऋतावृधः, गायत्रम् । २६।१३. **तृतीये** । सावित्रं–

अभि त्वा देव सवितः। द्यावापृथिवीयं- प्र वां महि द्यवि। आर्भवं- इन्द्र इषे ददातु नः इत्येका, ते नो रत्नानि धत्तन इति द्वे, वैश्वदेवं मनुः, (नहि अस्त्यर्भक इत्येका, आ शर्म [पर्वतानां] इति चतस्रः इति मनुप्रवल्हः। शांश्रौ. १०।११।२०. 'प्रवर्हः प्रकर्षेण उद्यतसार इत्यर्थः' इति भाष्यम्। मनुना वैवस्वतेन दृष्टाः इति तात्पर्यम्)। द्विपदाः। वैश्वदेवं- विश्वे देवास आगत, गायत्रम्। २६।१७.

वैश्वदेवं पवमानोक्थम्। अग्निष्टोमे। प्रतिपत्- तत्सवितुर्वृणीमहे। सावित्रं- पदविग्रहणम्। अनुचरः- सावित्रः गायत्रीः शंसति, सूक्तं सावित्रं शंसति, वायव्यां शंसति, तस्यै द्विदेवत्यान् विमुञ्चन्ति। द्यावापृथिवीयं शंसति, अध्वर्युः मद्वत् प्रतिगृणाति। सुरूपकृत्नुं शंसति, आर्भवं शंसति, आदित्यां बार्हस्पत्यां इति शंसति, वैश्वदेवं शंसति, द्विः पच्छः परिधानीयां शंसति, अर्धर्चशः तृतीयम्, चत्वारि सूक्तानि वैश्वदेवे शंसति, एनत् आरतं (शनैः) शंसेत्। १६।३. षोळशाहावं वैश्वदेवं शंसति। तत् सप्तदशविधं भवति एकादश देवताः, चतस्रो निविदः, उक्थवीर्यं, याज्या इति। याज्या- विश्वे देवाः शृणुतेमं त्रिष्टुप्। अनुवषट् करोति। १६।४.

वैश्वदेवं पृष्ठ्ये षडहे **प्रथमेऽहनि** व्यूढे समूढे च। सावित्रं- युञ्जते मन उत युञ्जते। द्यावापृथिवीयं- प्र द्यावा यज्ञैः पृथिवी। आर्भवं- इहेह वो मनसा। वैश्वदेवं- हयो न विद्वाँ अयुजि, तस्य द्वे उत्तमे उत्सृजति। तदु ह स्माह कौषीतकिः शंसेदेव सूक्तस्य अन्यत्रच्छेदाय। २२।१. **द्वितीयेऽहनि** व्यूढे समूढे च। सावित्रं- तद्देवस्य सवितुर्वार्यम्। द्यावापृथिवीयं- ते हि द्यावापृथिवी। आर्भवं- तक्षन् रथं सुवृतम्। वैश्वदेवं- यज्ञस्य वो रथ्यं, शार्यातम्। २२।२. **तृतीयेऽहनि**। अनुचरः- अभि त्वा देव सवितः। सावित्रं- उदु ष्य देवः सविता। द्यावापृथिवीयं- घृतवती भुवनाना। आर्भवं- अनश्वो जातो। वैश्वदेवं- परावतो ये दिधिषन्त। अर्धर्चोदर्काणि ह वा एतानि सूक्तानि भवन्ति, पदोदर्काण्येकानि, अर्धपदोदर्काण्येकानि। अथैतत् तृतीयपदोदर्कमेव। २२।५. **चतुर्थेऽहनि**। अनुचरः- हिरण्यपाणिमूतये। सावित्रं- आ देवो यातु सविता। द्यावापृथिवीयं- प्र द्यावा यज्ञैः पृथिवी। आर्भवं- प्र ऋभुभ्यो दूतमिव। वैश्वदेवं- प्र शुक्रैतु देवी। द्विपदाः शस्यन्ते। २२।९. **पञ्चमेऽहनि**। अनुचरः- तत्सवितुर्वरेण्यम्। सावित्रं- उदु ष्य देवः सविता। द्यावापृथिवीयं- मही द्यावापृथिवी। आर्भवं- ऋभुर्विभ्वा वाज इन्द्रो। वैश्वदेवं- को नु वां मित्रावरुणा। २३।३. **षष्ठेऽहनि**। प्रतिपत्- अभि त्यं देवं सवितारं, अतिच्छन्दाः। अनुचरः- अभित्वान्। सावित्रं- उदु ष्य देवः सविता। द्यावापृथिवीयं- कतरा पूर्वा कतरा। आर्भवं- किमु श्रेष्ठः किं यविष्ठो। वैश्वदेवं- इदमित्था रौद्रं गूर्तं, तस्य द्वे उत्तमे परिशिष्य 'ये यज्ञेन दक्षिणया' इत्येतं नाराशंसं समावपति। २३।८.

वैश्वदेवं महाव्रते। प्रतिपत्- तत्सवितुर्वृणीमहे। अनुचरः- अद्या नो देव सवितः। सावित्रं- तद्देवस्य सवितुः। द्यावापृथिवीयं- ते हि द्यावापृथिवी। आर्भवं- किमु श्रेष्ठः किं यविष्ठो। वैश्वदेवं- अस्य वामस्य पलितस्य। कौआ. २।८.

वैश्वदेवं विषुवति अहनि। प्रतिपत्- तत्सवितुर्वृणीमहे। अनुचरः- अद्या नो देव सवितः, नित्यैव। सावित्रं- युञ्जते मन उत युञ्जते। द्यावापृथिवीयं- ते हि द्यावापृथिवी। आर्भवं- किमु श्रेष्ठः किं यविष्ठो। वैश्वदेवं- देवान् हुवे बृहच्छ्रवसः। २५।९.

वैश्वदेवं स्वरसामनि **प्रथमे**। प्रतिपत्- पृष्ठ्यषडहस्य समूढस्य प्रथमाहवत्। अनुचरः- पृष्ठ्यषडहस्य समूढस्य चतुर्थाहवत्। वैश्वदेवं- प्र वः पान्तं रघुमन्यवोऽन्धः। इदं परोक्षवैश्वदेवं, प्रत्यक्षं वैश्वदेवमेव अवधीयेत- अग्निरिन्द्रो वरुणो मित्रो इति। शेषं सर्वं पृष्ठ्यषडहस्य समूढस्य चतुर्थाहवत्। २४।९. **द्वितीये**। प्रतिपत्- पृष्ठ्यषडहस्य समूढस्य द्वितीयाहवत्। अनुचरः- पृष्ठ्यषडहस्य समूढस्य पञ्चमाहवत्। वैश्वदेवं- तं प्रत्नथा पूर्वथा। इदं परोक्षं वैश्वदेवं, प्रत्यक्षं वैश्वदेवमेव अवधीयेत देवान् हुवे बृहच्छ्रवसः इति। शेषं सर्वं पृष्ठ्यषडहस्य समूढस्य पञ्चमाहवत्। २४।९. **तृतीये**। प्रतिपत्- पृष्ठ्यषडहस्य समूढस्य तृतीयाहवत्। अनुचरः- पृष्ठ्यषडहस्य समूढस्य

षष्ठाहवत् । वैश्वदेवं– कदित्था नॄँः पात्रम् । इदं परोक्षं वैश्वदेवं, प्रत्यक्षं वैश्वदेवमेव अवधीयेत उषासानक्ता बृहती इति । शेषं सर्वं पृष्ठ्यषडहस्य समूढस्य षष्ठाहवत् । २४।९.

**वैश्वदेवपर्व** । फाल्गुन्यां पौर्णमास्यां वैश्वदेवेन यजते । तानि वा अष्टौ हवींषि भवन्ति । वाजिनं नवमम् । अग्निर्मथ्यते । सप्तदश सामिधेन्यः, सद्वन्तौ आज्यभागौ, विराजौ संयाज्ये, नव प्रयाजाः, नवानुयाजाः । ५।१. अग्नीषोमौ प्रथमौ यजति, अथ सवितारं, सरस्वतीं, पूषणं, मरुतः स्वतवसः, वैश्वदेवी पयस्या, द्यावापृथिवीय एककपालः । दक्षिणा– प्रथमजं गां ददाति, पुरस्तादुपरिष्टाद्वा शंयोर्वाकस्य अनावाहितान् वाजिनो यजति । पुरस्तात् पौर्णमासेन यजते । ५।२.

**वैश्वदेवानां** ( शस्त्राणां ) द्वे प्रतिपदौ द्वावनुचरौ । २०।३.

**व्यूढच्छन्दसः** मध्यंदिनात् एतानि विज्ञातत्रैष्टुभानि सवनधरणानि न च्यवन्ते । २२।७.

**व्रतं** उपसत्सु ( अशनं ) पयोव्रतो यजमानः परोवरीयसीः अभ्युपेयात् त्रीनग्रे स्तनान्, अथ द्वौ, अथैकं इति । सम्राजोऽस्मै भक्षे दध्यानयेयुः, न व्रते । ८।९.

**व्रतं** ( अशनं पयः इ० ) दीक्षितस्य सायंप्रातः प्रदीयते । ७।३.

**व्रीह्याग्रयणं** यवाग्रयणं च व्रीहिसस्ये यवसस्ये वा आगते अमावास्यायां पश्चात्, पौर्णमास्यां वा पूर्वं, पूर्वपक्षगतनक्षत्रे वा कस्मिँश्चित् । सप्तदश सामिधेन्यः, सद्वन्तावाज्यभागौ, विराजौ संयाज्ये । ऐन्द्राग्नो द्वादशकपालः, वैश्वदेवश्चरुः, द्यावापृथिवीय एककपालः । दक्षिणा प्रथमजं गां ददाति । ४।१४.

**शंयोर्वाकमाह** अप उपस्पृशति । दर्शपूर्ण० । ३।८.

शंयोर्वाकमाह पत्नीसंयाजोत्तरम् । दर्शपूर्ण० । ३।९.

**शंय्वन्तं** प्रायणीयं उदयनीयं च । ७।७,८।२.

**शस्त्रं** साम्ना उपसंतन्वन्ति । होता साम्ना शस्त्रमुपसंतनोति । १७।६,७.

शस्त्रं स्तुतमनु शस्तं भवति । १७।६.

**शस्त्रजपः** ‘उक्थमवाचि’ इति प्रातःसवने उपांशु होता ब्रूयात् । ‘उक्थमवाचीन्द्राय’ इति माध्यंदिने । ‘अवाचीन्द्रायोक्थं देवेभ्यः’ इति तृतीयसवने । ‘उक्थशाः’ इति अध्वर्युः प्रातःसवने माध्यंदिने तृतीयसवने च । १४।३.

**शस्त्राणि** चतुराहावानि उत्सर्गतः । २८।१०. मैत्रावरुणस्य तु षष्ठेऽहन् एव पञ्चाहावं शस्त्रं भवति । ३०।१०.

शस्त्राणि पञ्चाहावानि छन्दोमेषु । २९।८.

शस्त्राणि सदसि अन्वाह । ११।८.

**शस्त्रानुवचनयोर्मध्ये** शुद्ध एव ( मकाररहितः ) प्रणवः स्यात्, मकारान्तः अवसानार्थे । ११।५.

**शाकल्यान्** जुहोति । अतिरात्रे हारियोजनोत्तरम् । १८।७.

**शान्तिमन्त्रः**– ऋतं वदिष्यामि सत्यं वदिष्यामि० वाङ् मे मनसि प्रतिष्ठिता० अग्न इळा० । कौआ. ७।१.

शान्तिमन्त्रः– तत्सवितुर्वृणीमहे, तत्सवितुर्वरेण्यं, अदब्धं मनः । कौआ. ९।१.

**शिल्पं** त्रिवृत्, नृत्यं गीतं वादितमिति । २९।५.

**शिल्पानि** मध्यमे त्र्यहे शस्यन्ते । विराजश्चतुर्थेऽहन् । पङ्क्तयश्च महापङ्क्तयश्च पञ्चमेऽहन् । अतिच्छन्दसः षष्ठेऽहन् । तानि वै तृचानि भवन्ति । २९।५.

**शीर्षण्यानि** शंसति निष्केवल्ये । महाव्रते । त्रीणि तृचानि भवन्ति, तानि त्रीणि पुनः एकैकं त्रेधात्रेधा, ता नव ऋचो भवन्ति । कौआ. २।२.

**शुचिं** अग्नेस्तनूं देवा आदित्ये न्यदधुः । १।१.

**शुचीष्टिः** अग्न्याधेये सप्तदशसामिधेनीका । सद्वन्तौ आज्यभागौ । विराजौ संयाज्ये । उपांशु । १।१.

**शुनासीर्यम्** । शुनासीर्येण यजते, अग्निर्मथ्यते, यदि वैश्वदेवस्य तन्त्रम् । यद्यु न मथ्यते पौर्णमासमेव तन्त्रं भवति । सप्तदश सामिधेन्यः, सद्वन्तौ आज्यभागौ, विराजौ संयाज्ये, नव प्रयाजा नवानुयाजाः । अष्टौ हवींषि, स्विष्टकृत् नवमम् । पञ्च संचराणि पौष्णान्तानि समानानि । शुनासीरौ यजति, वायुं यजति, सौर्यं एककपालः । दक्षिणा श्वेता । ५।८. प्रायश्चित्तप्रतिनिधीन् कुर्वन्ति यदाहुतीर्जुहोति । ५।९. स्वैरग्निभिर्यजमानं संस्थापयति । ५।१०.

**शौनकयज्ञः** । फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । य इच्छेत् द्विषन्तं भ्रातृव्यं स्तृण्वीयेति सोऽनेन यजेत । दाक्षायणयज्ञवत् । ४।७.

**श्यामाकाग्रयणम्** । अन्नाद्यकामो यजेत , वर्षास्वागते श्यामाकसस्ये श्यामाकानुद्धर्तवै आह । तस्मिन् काले या अमावास्योपसंपद्येत तयेष्ट्वा अथ एतयेष्ट्या यजेत , यदि पौर्णमासी एतया इष्ट्वा अथ पौर्णमासेन यजेत । यद्यु नक्षत्रमुपेप्सेत् पूर्वपक्षे नक्षत्रमुदीक्ष्य यस्मिन् नक्षत्रे कामयेत तस्मिन् यजेत । सप्तदश सामिधेन्यः, सद्वन्तौ आज्यभागौ , विराजौ संयाज्ये । सौम्यश्चरुः । मधुपर्कं ( दक्षिणां ) ददाति । ४।१२.

**श्रैष्ठ्यकामस्य** यज्ञः साकंप्रस्थाय्यः । ४।९.

**श्रोतव्यो** मन्तव्यो निदिध्यासितव्य आत्मा । कौआ. १३.

**षष्ठे** एवाहन् मैत्रावरुणस्य पञ्चाहावं शस्त्रं भवति । ( इतराणि तु ) चतुराहावानि शस्त्राणि । ३०।१०.

**षष्ठेऽहनि** पृष्ठ्ये षडहे परुच्छेपः शस्यते । नित्याः पूर्वा याज्याः कृत्वा पारुच्छेपीभिर्यजन्ति । तदहर्न वषट् कुर्वन्ति । नित्यान् पूर्वान् ऋतुयाजान् कृत्वा गार्त्समदैर्यजन्ति एभिस्तदहर्न वषट् कुर्वन्ति । २३।४. ऐकाहिकीभिरेव यजेयुः । २३।५. आज्यम्, प्रउगः, मरुत्वतीयम् । २३।६–७. निष्केवल्यम् । २३।७. वैश्वदेवं , आग्निमारुतम् । २३।८.

**षोडशी क्रतुः** । षोडशमेतत् स्तोत्रं षोडशं शस्त्रम् । स्तोत्रियः– ‘इन्द्र जुषस्व प्रवहाऽऽयाहि शूर हरिहा’ इत्यादिः सौत्रतृचः ( शांश्रौ. ९।५), ‘त्वावतः पुरूवसो’ इति गायत्रीमुप संशंसति । एतया सह स्तोत्रियः । अनुरूपः– एतत्प्रतिरूपमु हैके अनुरूपं कुर्वन्ति । ( वस्तुतस्तु– ) अत्रानुरूपं नाद्रियेत । १७।१. अत ऊर्ध्वानि छन्दांसि विहरति , गायत्रीश्च पङ्क्तीश्च विहरति । उष्णिहश्च बृहतीश्च विहरति । द्विपदां च विंशत्यक्षरां , त्रिष्टुभं च विहरति । द्विपदाश्च षोळशाक्षरा , जगतीश्च विहरति । ( सर्वं विहरणं शांखासूत्रे (९।५–६ स्पष्टम्) । गायत्रीः शंसति , सप्तपदां शंसति । १७।२. नित्या अनुष्टुभः शंसति । त्रिःशस्ता परिधानीया । उद्यद् ब्रध्नस्य विष्टपं इति परिदधाति । त्रिरेव षोळशिने आह्वयते स्तोत्रियायै निविदे परिधानीयायै । १७।३. याज्या– विहृतया त्रिष्टुभा यजेत् इति हैक आहुः ‘एवा हि वाज्यपाः पूर्वेषां हरिवः० जठरमापृणस्व’ इति । अविहृतया इति त्वेव स्थितम् । एतदहः षोळश्यन्तं संतिष्ठते । तन्न रात्र्या उपेयात् , तदु वा आहुः उपेयात् । १७।४.

**संनयन्** अमावास्यायां इन्द्रं यजति । ३।६.

संनयन् सांनाय्यस्यान्तरेण उपांशु आज्यस्य यजति । ३।६.

**संनवती** ऋक्– संसीदस्व महाँ असि । ८।४.

**संनिवपनीया** इष्टिः सत्रे । अग्नये ब्रह्मण्वते अष्टाकपालं पुरोळाशं निर्वपन्ति । अग्नये क्षत्रवते एकादशकपालम् । अग्नये क्षत्रभृते द्वादशकपालम् । बहूनां चेष्यमाणानां एषा संनिवपनीया एषा संभरणीया, सैव एकस्य दीक्षिष्यमाणस्य भवति । १९।१.

**संनिवापः** अग्नीनां सत्रे । १९।१.

**संयाज्ये** ईळितवत्यौ हव्यवाड्वत्यौ पवमानेष्टौ प्रथमायां, ( ‘तं हि शश्वन्त ईळते, ते स्याम ये अग्नये’ इति ) । पौर्णमासं तन्त्रम् । अग्न्याधेये । १।१.

संयाज्ये त्रिष्टुभौ आग्नेय्यौ आतिथ्यायां ‘होतारं चित्ररथमध्वरस्य, यस्त्वा स्वश्वः सुहिरण्यो अग्ने’ इति । ८।२.

संयाज्ये त्रिष्टुभौ दीक्षणीयायां अग्निष्टोमे । ७।२.

संयाज्ये द्व्यग्नी अग्न्याधेये द्वितीयेष्टौ ( अग्निमग्निं हवीमभिः, अग्निनाऽग्निः समिध्यते ) । १।१.

संयाज्ये प्रायणीयोदयनीययोः अग्निष्टोमे । त्वां चित्रश्रवस्तम , यद्वाहिष्ठं तदग्नये० इत्यनुष्टुभौ । नैते विपर्यस्यति । ७।९.

संयाज्ये विराजौ अग्न्याधेये तृतीयेष्टौ शुचीष्टौ (प्रेद्धो अग्ने, इमो अग्ने ) । १।१.

संयाज्ये विराजौ वरुणप्रघासेषु । ५।३.

संयाज्ये विराजौ वैश्वदेवपर्वणि । ५।१.

संयाज्ये विराजौ शुनासीर्ये । ५।८.

संयाज्ये विराजौ श्यामाकाग्रयणे वेणुयवाग्रयणे व्रीह्याग्रयणे यवाग्रयणे च । ४।१२.

संयाज्ये विराजौ साकमेधेषु । ५।५.

**संसवः** पूर्वदीक्षितस्यापि– कामं पूर्वो दीक्षित्वा संसुनुयात् । ७।१.

**संस्रवान्** होतृचमसे अवनयति द्विदेवत्यानाम् । १३।६.

**संहितापदक्रमज्ञानमाहात्म्यम्** । कौआ. ७।११.

**संहितोपनिषत्** पूर्वोत्तराक्षराद्युपासनाः । कौआ. ७।२–८, १२–२१.

**संहितोपासनं** ( षकारणकारौ ) । कौआ. ८।११.

सत्यं वदति दीक्षितः । ७।३.

**सत्रम्** । दीक्षिष्यमाणाः अग्नीन् संनिवपन्ते, संनिवपनीयामिष्टिं तन्वते । १९।१. प्राजापत्यः पशुः । पुरस्तादेव दीक्षाप्रसवान् कल्पयन्ते । दीक्षाकालः । १९।२–३. दीक्षणीया पञ्चहविः, आतिथ्या पञ्चहविः । अग्नीन् प्रणयन्ति– बह्वग्नीरन्वाह ता वै चतस्रो भवन्ति । त्रिः प्रथमया त्रिरुत्तमया अष्टौ संपद्यन्ते । अथ चिन्वन्ति यावदहं कामयन्ते । अथैतं संचितं सामभिः परिष्टुवन्ति। अथ होतारमाहुः अग्न्युक्थं अनुजप इति । निरुक्तं वैश्वानरं यजति । १९।४. अत ऊर्ध्वं ऐकाहिकं कर्म । हविर्धानयोः प्रवर्तनं, अग्नीषोमयोः प्रणयनं, अग्नीषोमीयः पशुः । अग्नीषोमीयस्य पशुपुरोळाशमनु देवसूभ्यो हवींषि निर्वपन्ति, अष्टौ भवन्ति । अत्र हैके सर्वपृष्ठायै हवींषि निर्वपन्ति, दश भवन्ति, अथ सुन्वन्ति यावदहं कामयन्ते । १९।५. अनूबन्ध्यस्य वपायां संस्थितायां त्वाष्ट्रेण चरन्ति, पत्नीशाले चरन्ति, उपांशु चरन्ति । पर्यग्निकृतमुत्सृजन्ति, न संस्थापयन्ति । १९।६. अनूबन्ध्यस्य पशुपुरोळाशमन्वञ्चि देविकाभ्यो हवींषि निर्वपन्ति, पञ्च भवन्ति । अत्र हैके देवीभ्यो हवींषि निर्वपन्ति, दश भवन्ति । अत्र हैके दिशामवेष्टीः कुर्वन्ति, षड् भवन्ति। संस्थितायामुदवसानीयायां मैत्रावरुण्या पयस्यया यजेत । १९।७. चतुर्विंशमहः । १९।८. अभिप्लवः षडहः । २०।१–४. पृष्ठ्यान्तान् वै इतः चतुरश्चतुरः अभिप्लवान् उपयन्ति । २१।५. द्वात्रिंशी प्रथमो मासः, द्वात्रिंशी उत्तमः । अष्टाविंशिनौ अभितो विषुवन्तं मासौ । षष्टिः षळहाः संवत्सरः । अथ हैके ऊर्ध्वानेव मासान् उपयन्ति, ऊर्ध्वानि अहानि । मासा एवावर्तेरन् नाहानि इत्येके, य एव पृष्ठ्यः षळहः पुनः परस्तात् पर्येति तेन मासा आवृत्ता इति वदन्तः । अहानि वर्तेरन् नो मासाः ( इति सा स्थितिः ) । २६।१. संस्थिते दशमेऽहनि पुरा पत्नीसंयाजेभ्यः संप्रसर्पन्ति । संस्थितेषु पत्नीसंयाजेषु इति त्वेव स्थितम् । ते संप्रसृप्य सार्पराज्ञ्या ऋक्षु स्तुवते, 'आयं गौः पृश्निरक्रमीत्' इत्येतं तृचं नान्तरियात् । 'अस्मासु नृम्णं धाः, वातापे हवनश्रुतः' इति अध्वर्युः गार्हपत्ये द्वे आहुती जुहोति, अथो अन्ये वाऽपि कामं यजेयुः, अथ भक्षयेयुः । प्रजापतेस्तनूर्होता वदेत् । २७।४. 'अन्नादी चान्नपत्नी च, भद्रा च कल्याणी च, अनिलया चापभया च, अनाप्ता चानाप्या च, अनाधृष्टा चानाधृष्या च, अपूर्वा चाभ्रातृव्या च' ( इति प्रजापतेस्तनवः ) । उदग्रवती अध्वर्युरपिदधाति सदसो द्वारौ, एवं शालायाः । २७।५. औदुम्बरीमन्वारभन्ते । उत्तमौ पाणी होता कुर्वीत, वाग्यताः संमील्यासते, आ नक्षत्राणां दर्शनात् । मार्जालीयन्यन्तेन नक्षत्रेषु चक्षुर्विसृजन्ते । तेऽपरया द्वारा हविर्धाने प्रपद्यन्ते । अथाध्वर्युः उत्तरस्य हविर्धानस्य कूबरीं अभिपद्याह सत्रस्यर्धिं गायेति । ( होता ) सत्रस्यर्द्धिं गायति । सर्वे साम्नो निधनमुपयन्ति । ते उत्तरस्य हविर्धानस्य अधोऽक्षं सर्पन्ति ( युवं तमिन्द्रापर्वता इति ) ऐन्द्रीं अतिच्छन्दसं जपन्तः । ते नु वा उ वयं उत्तरेणैव परीमः इति ह स्माह कौषीतकिः । ते अग्रेण हविर्धाने समुपविश्य कामान् ध्यायन्ते 'अयं नः कामः समृध्यताम्' इति । ये बहुकामा भवन्ति 'भूर्भुवःस्वः' इत्येतास्ते व्याहृतीर्जपेयुः । ते प्राञ्च उदञ्च उत्क्रम्य वाचं विह्वयन्ते ( वागैतु इत्यादि विस्पष्टमाह्वयन्ते ) । सुब्रह्मण्यायै वाचं विसृजन्ते । ते आग्नीध्रीये सह राज्ञा संविशन्ते । २७।६.

सदः प्रसर्प्स्यन् ( धिष्ण्यान् ) नमस्यन्ति नमो नम इति । अग्निष्टोमे । १३।१.

सदसि उक्थानि ( शस्त्राणि ) शस्यन्ते । हविर्धानयोः प्रातरनुवाकमन्वाह । ११।८.

**सद्वन्तौ** आज्यभागौ पवमानेष्टिषु ( त्वमग्ने सप्रथाः० सोम यास्ते इति सद्वन्तावाज्यभागौ । शांश्रौ. २।२।१३ )। १।१. वरुणप्रघासेषु । ५।३. वैश्वदेवपर्वणि । ५।१. शुनासीर्ये । ५।८. श्यामाक–वेणुयव–व्रीहि–यवाग्रयणेषु । ४।१२. साकमेधेषु । ५।५.

**सप्तदशारत्निः** । वाजपेययूप एवावधृतः सप्तदशारत्निः । १०।१.

**समिधम्** । अनूयाजसमिधं अनुमन्त्रयेत ( एषा ते अग्ने इति ) । दर्शपूर्ण० । ३।७.

**समिधमभ्यादधाति** पालाशीं प्रादेशमात्रीं अग्निहोत्रहोमार्थम् । २।२.

**समूढ** उ हैवाग्रे आस ( दशरात्रः । छन्दसां विशिष्टेनाभिध्यानेन व्यूढः समुत्पन्नः ) । २७।७.

**सम्राजोऽस्मै** भक्षे दध्यानयेयुः न व्रते ( व्रते तु सम्राजोऽपि पय एव । भक्षे तु तस्य दधि स्यात् दधिचमस इत्यर्थः । स च ऐतरेयरीत्या न स्यादित्यन्यदेतत् ) । ८।९.

**सर्वकामस्य** यज्ञः मुन्ययनम् । ४।१०.

**सर्वपृष्ठा** । हवींषि दश एके । सत्रस्य प्रायणीयेऽतिरात्रे । १९।५.

**सवनधरणानि** विज्ञातत्रैष्टुभानि, अपि व्यूढच्छन्दसः माध्यंदिनात् न च्यवन्ते । २२।७.

**सवनीयः** पशुः ऐन्द्राग्नः स्यात् इति हैक आहुः । आग्नेय एव स्यात् । शिक्षायामेवावधृतः आग्नेयः । १२।६. एकादशिनीं त्वेव अन्वायातयेयुः इति सा स्थितिः । १२।७.

सवनीयः पशुः विषुवति अहनि सौर्यः उपालम्भ्यः । स उपांशु भवति । २५।१०.

**सवनीयपशौ** वपायाः याज्या– भुवो यज्ञस्य रजसश्च०, पुरोडाशस्य– प्र वः शुक्राय भानवे०, हविषः– प्र कारवो मनना० । आवाहने प्रातःसवने– आवह देवान् यजमानाय अग्निमग्न आवह वनस्पतिमावह इन्द्रं वसुमन्तमावह इति । माध्यंदिने इन्द्रं रुद्रवन्तमावह इति । तृतीयसवने– इन्द्रमादित्यवन्तमृभुमन्तं० इति । एके तु वनस्पतिं अन्तत आवाहयन्ति तृतीयसवने ह्येनं यजन्तीति वदन्तः । ( परन्तु ) पशुमेवोपसंधाय वनस्पतिरावाह्यः । १२।७.

**सवनीयपुरोडाशाः** हविष्पङ्क्तिः नाम । माध्यंदिनपवमानः, दधिघर्मः, हविष्पङ्क्तिः इति क्रमः । १५।१.

**सहचराणि** वै शिल्पानि भवन्ति । षष्ठेऽहन् । ३०।३. नाभानेदिष्ठं होता, वालखिल्यानि मैत्रावरुणः । ३०।४.

**साकंप्रस्थाय्यः** । फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । स एष श्रैष्ठ्यकामस्य पौरुषकामस्य यज्ञः । साकं संप्रतिष्ठन्ते, साकं संप्रयजन्ते, साकं भक्षयन्ते । ४।९.

**साकमेधाः** । अग्निमनीकवन्तं प्रथमं यजति, मध्यंदिने मरुतः सांतपनान्, सायं गृहमेधीयेन चरन्ति । पोषवन्तौ आज्यभागौ । श्वोभूते प्रातः पूर्णदर्व्येण चरन्ति, मरुतः क्रीळिनो यजति, अग्निं प्रणयन्ति, अग्निमन्थनं, सप्तदश सामिधेन्यः, सद्वन्तौ आज्यभागौ, विराजौ संयाज्ये, नव प्रयाजाः, नवानुयाजाः । समानानि षट् संचराणि ऐन्द्राग्नान्तानि, महेन्द्रमन्ततो यजति, वैश्वकर्मणः एककपालः । अष्टौ हवींषि, स्विष्टकृन्नवमः । दक्षिणा ऋषभं ददाति । ५।५. अपराह्णे पितृयज्ञेन चरन्ति । ५।६–७. उदञ्चः परेत्य त्र्यम्बकैश्चरन्ति, अन्ततः इष्ट्वा इष्ट्या यजते, परस्तात् पौर्णमासेन यजते । ५।७.

**साम** महाव्रते, भूतेछदांसि, क्रोशं, अनुक्रोशं, पयः, अर्कं, अर्कपुष्पम् । कौआ. १।४.

साम राजनं पृष्ठं निष्केवल्यस्य । महाव्रते । कौआ. २।१.

**सामानि** कुर्वन्ति ( षष्ठेऽहन् ) अगूर्ध्वं, भद्रं, उद्वंशपुत्रं इति । अथो द्विपदाः । ३०।३.

**सामिधेनी** एका महापितृयज्ञे 'उशन्तस्त्वा' इति । ५।६.

**सामिधेन्यः** तिस्रः उपसत्सु । उपसद्याय मीह्ळुषे इत्येतं तृचं पूर्वाह्णे अनुब्रूयात्, इमां मे अग्ने समिधं इति तृचमपराह्णे । अपराह्णे एतावेव तृचौ विपर्यासेन । इति अहरहर्विपर्ययमनुब्रूयात् । अनवानमनुब्रूयात्, त्रिस्त्रिरेकैकामनुब्रूयात् । ८।८.

सामिधेन्यः दर्शपूर्णमासयोः । जपः पुरस्तात् सामिधेनीनां, हिंकृत्य सामिधेनीरन्वाह, त्रिर्हिंकरोति । एकादश सामिधेनीरन्वाह, त्रिः प्रथमया त्रिरुत्तमया पञ्चदश संपद्यन्ते, गायत्र्यो भवन्ति, उत्तमायै तृतीये वचने प्रणवेन निगदमुपसंदधाति 'अग्ने महां असि ब्राह्मण भारत' इति । ३।२.

सामिधेन्यः पञ्चदश दीक्षणीयायां अग्निष्टोमे । ७।२.

सामिधेन्यः सप्तदश अग्न्याधेये शुचीष्टौ । १।१. आतिथ्यायां अग्निष्टोमे । ८।२. इष्टिपशुबन्धेषु । १।१. वरुणप्रघासेषु । ५।३. वैश्वदेवपर्वणि । ५।१. शुनासीर्ये । ५।८. श्यामाक-वेणुयव-व्रीहि- यवाग्रयणेषु । ४।१२. साकमेधेषु । ५।५.

**साम्ना** शस्त्रं उपसंतन्वन्ति । १७।६. होता साम्ना शस्त्रमुपसंतनोति । १७।७.

**सार्वसेनियज्ञः** । फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते । अयं प्रजातिकामस्य यज्ञः । ४।६.

**सावित्रः** पशुः उपांशु भवति । २५।१०.

**सावित्रग्रहस्य** ( तृतीयसवने ) त्रिष्टुभमनूच्य जगत्या यजति । नानुवषट् करोति । १६।२.

**सावित्रग्रहेण** चरन्ति । तृतीयसवने औपासनान् उपास्यन्ति, अथ सावित्रग्रहेण चरन्ति । त्रिष्टुभं सावित्र-ग्रहस्य पुरोऽनुवाक्यामन्वाह । ३०।१.

सावित्रग्रहेण प्रातःसवने चरन्ति, तं माध्यंदिने, तृतीयसवने सवितारं यजति । १६।२.

**सुकीर्तिं** शंसति ब्राह्मणाच्छंसी षष्ठेऽहन् । ३०।५.

**सूक्तवाकमाह** । 'अग्निरिदं हविरजुषत इति हैक आहुः, न तथा कुर्यात् हविरजुषत हविरजुषत ( अग्नि-र्हविरजुषत । शांश्रौ. १।१४।६) इत्येव ब्रूयात् । सूक्तवाके यजमानस्य नाम गृह्णाति, उच्चैर्गृह्णीयात्- पञ्चाशिषो वदति, इळायां तिस्रः । बर्हिषि प्राञ्चमञ्जलिं निधाय जपति 'नम उप' इति । ३।८.

**सूक्तवाके** इडायां च 'आगुर उद्टचं' इत्याह दीक्षणीयायां अग्निष्टोमे । ७।२.

सूक्तवाके यजमानस्य नाम न गृह्णाति दीक्षणीयायां अग्निष्टोमे । ७।२. महापितृयज्ञे । ५।७.

**सूददोहाः** 'ता अस्य सूददोहसः' इति ऋक् । निष्केवल्ये मध्येमध्ये शस्यते महाव्रते । कौआ. २।१. अत्र चतुर्विंशतिकृत्वः शस्ता भवति । कौआ. २।११.

**सोमः** किंदेवत्यः ? सोमदेवत्य एवेति गौश्रः । ऐन्द्र इति पैङ्ग्यः । ऐन्द्राग्न इति कौषीतकिः । १६।९.

**सोमक्रयः** अग्निष्टोमे । तं वै चतुर्भिः क्रीणाति, गवा चन्द्रेण ( रजतेन ) वस्त्रेण छागया । तस्मै क्रीताय नवान्वाह- भद्रादभि श्रेयः प्रेहीति प्रवर्त्यमानायान्वाह । इमां धियं शिक्षमाणस्य, वनेषु व्यन्तरिक्षं, इति त्रिष्टुभौ वारुण्यौ अन्वाह । सोम यास्ते मयोभुव इति चतस्रो गायत्रीः सौमीरन्वाह । उत्तमायां अर्धर्चमुक्त्वा उपरमति। या ते धामानि हविषा यजन्ति इति प्रपाद्यमानायान्वाह । अगन् देव ऋतुभिरिति परिदधाति । त्रिः प्रथमया त्रिरुत्तमया त्रयोदश संपद्यन्ते । ७।१०.

**सोमप्रणयनम्** । आग्नीध्रीये अग्निनिधानोत्तरं केवलं सोमं प्राञ्चं हरन्ति । सोमो जिगाति गातुवित् इति तृच-मनुब्रुवन् अनुसमेति, तामनुब्रूयात् उप प्रियं पनिप्नतं इति । तस्या एवैषा याज्या । पूर्वया द्वारा राजानं प्रपादयन्ति, तस्मिन् प्रपाद्यमाने तमस्य राजा वरुणः इत्यन्वाह । अन्तश्च प्रागा अदितिः इति प्रपन्नाय । श्येनो न योनिं, गणानां त्वा, अस्तभ्नाद् द्यां, इति सन्न-मनुस्तौति । एवा वन्दस्व वरुणं इति परिदधाति । ता विंशतिमन्वाह, त्रिः प्रथमया त्रिरुत्तमया चतुर्विंशतिः संपद्यन्ते । एवं नु यदि पूर्वया द्वारा राजानं प्रपादयन्ति । यद्यु वा अपरया, तेनैव होता अनुसमीयात् उत्तरतो दक्षिणा तिष्ठन् परिदधाति । ९।६.

**सोमप्रपादनं** हविर्धाने पूर्वया द्वारा अपरया वा । ९।६.

**सोमेनेष्ट्वा** सौत्रामण्या यजेत मैत्रावरुण्या वा पयस्यया यजेत । १६।१०.

**सोमे** सुते प्रवर्ग्यः इत्याचक्षते, स्तुते ( वा ) बहि-ष्पवमाने, अत्र पक्षे आग्नीध्रीये प्रवृञ्ज्युः । सुत्यायां अनवानमेवोपचारः । ८।७.

**सौत्रामणी** । सोमेनेष्ट्वा सौत्रामण्या यजेत । त्रिपशुः । अवभृथमवैति यथा सोमे । १६।९.

**सौम्ययागः**। वैश्वदेवशस्त्रोत्तरं घृतयागः अथ सौम्ययागः। उच्चैः सौम्यस्य यजति। तस्य न परस्तात् पर्यजेत् इत्याहुः। पर्यजेत् इति त्वेव स्थितम् (पुनः घृतयागः)। अथास्य सर्पिषि (सौम्यपुरोडाशे भूयसा प्रक्षिप्ते सर्पिषि) आत्मानं पर्यवेक्ष्य अङ्गुलिभ्यां सर्पिरुपस्पृशति, चक्षुष्पा असि चक्षुर्मे पाहि इति चक्षुषी विमृजीत। तं उद्गातृभ्यः प्रयच्छति। १६।५.

**सौर्यः** पशुरुपांशु भवति। २५।१०.

**स्तुतमनु** शस्तं भवति। १७।६.

**स्तोत्रियौ**। वैश्वामित्रौ मैत्रावरुणस्य च अच्छावाकस्य च स्तोत्रियौ भवतः। स्तोत्रियान् शस्त्वा श्वःस्तोत्रियान् अनुरूपान् कुर्वन्ति। २८।१०.

**स्तोमः** चतुर्विंशः चतुर्विंशेऽहनि महाव्रते च। १९।८.

स्तोमः पञ्चविंशो महाव्रते। कौआ. १।१.

**स्पर्शानां** ऊष्मणां स्वराणां चोपासना। कौआ. ८।८.

**स्रुगादापनेन** (घृतवतीमध्वर्यो इति मन्त्रेण) स्रुचावादापयति देवताऽऽवाहनोत्तरं दर्शपूर्ण०। ३।३.

**स्रुचं** द्विरुदीचीमुद्यच्छति उत्तरतः सायमुपमार्ष्टि। दक्षिणत ऊर्ध्वाम्। अग्निहोत्रे। २।२.

**स्रुचा** भक्षयति। द्विः प्रदेशिन्या प्राश्नाति, स्रुचा भक्षयति। स्रुचं निर्लेढि, स्रुचं मार्जयति, प्रागुदीचीं स्रुचमुद्दिशति अग्निहोत्रे। २।२.

**स्रुचो** बुध्नेन अङ्गारानुपस्पृशति अग्निहोत्रहोमोत्तरम्। २।२.

**स्वप्नः** कर्मसाफल्यसूचकः स्त्रीदर्शनरूपः। कौआ. ९।८.

**स्वप्नाः** मरणसूचकाः। कौआ. ११।४.

**स्वरः** अग्निष्टोमे। अग्निप्रणयनात् प्राक् उपसदन्तं उपांशु चरेयुः यथैव मिथः संशृण्वीरन्। अग्नौ प्रणीयमाने प्रथमत एव उच्चैरनुब्रूयात्। ९।१.

स्वरः उपांशु पवमानेष्टिषु। १।१.

स्वरः उपांशु, पुनराधेयिकी इष्टिः द्वितीयानुयाजान्तम्। उत्तमोऽनुयाजः सूक्तवाक-शंयुवाकौ च (इति उत्तरं सर्वं) उच्चैः। १।५.

**स्वरसामसु** पृष्ठानि। यदि स्वराणि पृष्ठानि भवन्ति बृहद्रथंतरे एव तर्हि सामगाः पवमानेषु कुर्वन्ति। यद्यु बृहद्रथंतरे पृष्ठे स्यातां, स्वराणि त्वेव सामगाः पवमानेषु कुर्वन्ति। स्वराणि त्वेव पृष्ठानि स्युः इति ह स्माह कौषीतकिः। २४।८.

स्वरसामसु प्रथमेषु त्रिषु आज्यं, प्रउगः, मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २४।५.

**स्वरसामानः** अग्निष्टोमा इति पैङ्ग्यम्। उक्थ्याः स्युरिति ह स्माह कौषीतकिः। २४।९.

स्वरसामानः त्रयः विषुवतः उपरिष्टात् आवृत्तक्रमेण अनुष्ठेयाः। 'अथ त्रीन् स्वरसाम्नः आवृत्तानुपयन्ति'। २५।१०.

स्वरसामानः नाम सत्रे विषुवतः पुरस्ताच्चोपरिष्टाच्चेति द्वौ त्र्यहौ भवतः। २४।३.

**स्वर्गकामः** खादिरं यूपं कुर्वीत। १०।१.

**स्वर्गकामस्य** यज्ञः तुरायणं नाम। ४।११.

**स्वर्गस्य** लोकस्य द्वारं चन्द्रमाः। कौआ. ३।२.

**हविर्धानप्रवर्तन**मग्निष्टोमे। हविर्धाने प्रवर्तयन्ति। द्वे भवतः। छदिस्तृतीयमभिनिदधाति। प्रेतां यज्ञस्य शंभुवेति प्रवर्तमानाभ्यामन्वाह। द्यावा नः पृथिवी इति वर्त्महोमानुवचनम्। तयोरिद् घृतवत् पयः, यमे इव यतमाने। अधि द्वयोरदधा उक्थ्यं वचः (इति छदिषि कीलादावुपरि दीयमाने)। विश्वा रूपाणि प्रतिमुञ्चते इति यद्धविर्धाने परिश्रयन्ति (तदा अनुब्रूयात्)। ९।३. अथो रराट्यामेव उत्तरया (रराटीं यष्टिं पश्यन् विश्वा रूपाणीति अनुब्रूयात्)। ते यदा नभ्यस्थे कुर्युः, अथ 'आ वामुपस्थमद्रुहा' इति (अनुब्रूयात्)। परि त्वा गिर्वणो गिर इति परिदधाति। ता अष्टौ भवन्ति, त्रिः प्रथमया त्रिरुत्तमया द्वादश संपद्यन्ते। तदु होतारमभिभाषन्ते 'यथा होतरभयमसत् तथा कुरु' इति। संप्रेषितः पुरा ऋक्प्रतिवदनात् दक्षिणस्य पादस्य प्रपदेन प्रत्यञ्चं लोष्टमपास्यति 'अपेतो जन्यं भयमन्यजन्यं च वृत्रहन्। अपचक्रा अवृत्सतम्' इति। स प्राच्यं दक्षिणस्य हविर्धानस्य उत्तरं वर्त्म उपनिश्रयेत। यत्र तिष्ठन् परिदध्यात् न तत इति वा इति वा इयात्। परिधाय दक्षिणं

बाहुमन्वावृत्य वाचंयमो यथेतं प्रत्येत्य यत्र तिष्ठन् प्रथमामन्ववोचत् तत्र स्थित्वा यथाऽवसथं अभ्युपेयात् । ९।४.

**हविर्धानयोः** प्रवर्तनं सत्रस्य प्रायणीयेऽतिरात्रे । ११।५.

हविर्धानयोः प्रातरनुवाकमन्वाह । ११।८.

**हविर्धाने** सोमस्य प्रपादनं पूर्वया द्वारा अपरया वा । ९।६.

**हविष्पङ्क्तिः** तृतीयसवने ( अपि ) । १६।१.

हविष्पङ्क्तिः । पञ्च हवींषि भवन्ति दधि धानाः सक्तवः पुरोळाशः पयस्या इति । येनैव मैत्रावरुणः प्रेष्यति, तेन होता यजति । 'प्रातः प्रातःसावस्य' इति प्रातःसवने, 'माध्यंदिनस्य सवनस्य' इति माध्यंदिने, 'तृतीयस्य सवनस्य' इति तृतीयसवने । प्रातरेव पयस्या, न मध्यंदिने न तृतीयसवने । १३।२. 'हविरग्ने वीहि' इत्यनुसवनं पुरोळाशस्विष्टकृतो यजति । १३।३. पुरोळाशैश्चरित्वा द्विदेवत्यैश्चरन्ति । १३।५.

**हविष्पङ्क्त्या** चरन्ति । आर्भवे पवमाने स्तुते पशुना चरन्ति । अथ हविष्पङ्क्त्या चरन्ति । ३०।१.

हविष्पङ्क्त्या चरन्ति दधिघर्मोत्तरम् । सवनीयपुरोडाशाः । १५।१.

**हारियोजनेन** चरन्ति अतिरात्रे । त्रिष्टुभमनूच्य जगत्या यजति मद्वत्या । अनुवषट् करोति । एतासां भूयिष्ठा धानानां आदधीत । ता आहवनीयस्य भस्मान्ते निर्वपन्ति । १८।६.

**होता** नाभानेदिष्ठं शंसति षष्ठेऽहन् । ३०।४.

**होतारः** सप्त । ऋचाऽभ्युदितं 'सप्त होतार ऋतुशो यजन्ति' इति । १३।९.

**होता** विषुवति अहनि शुक्लः पिङ्गाक्षः स्यादिति हैक आहुः । यथोपपादं इति त्वेव स्थितम् । २५।१०.

होता साम्ना शस्त्रमुपसंतनोति । १७।७.

**होतुः** औपगात्रं ( उपगातृत्वं ) भवति । १२।५.

**होतृचमसः** । प्रस्थितयाज्याः, अथेळा, अथ होतृचमसः माध्यंदिने । १५।१, १६।१.

**होतृचमसभक्षणम्** । इळामुपहूय अवघ्राय अवस्यति, प्राश्नाति उत्तरेळां, अथाप आचम्य होतृचमसं भक्षयति । सर्वे समुपहूय भक्षयन्ति । १३।७.

**होतृचमसे** द्विदेवत्यानां संस्रवान् अवनयति । १३।६.

**होत्राः** संयजन्ति प्रस्थितानाम् । १३।६, १६।१.

**होत्राशंसिनः** सामसंततिं कुर्वन्ति । १७।७.